# Sanskrit Self Teacher

## PART 12

By

Pandit Dr. S. D. SATWALEKAR

पारडी [ जि. वलसाड ]

# Regarding Compounds

In Sanskrit language, the use of Compounds ( समास ) is found everywhere. It is, therefore, necessary for everyone who whishes to study the Sanskrit language to get acquainted with compounds. In this book every kind of compound has been dealt for the acquaintance of students. Therefore, a study of this book well, will give good knowledge of the compounds to the students. It is hoped that the students having studied this well, will enter the temple of Sanskrit Literature.

The Author

First Edition 1976

Printed & Published by V. S. Satwalekar,
Bharat-Mudranalaya, Swadhyaya Mandal,
PARDI, Dist. Valsad ( Gujarat ) India

# Sanskrit-Self-Teacher

## PART 12

## Lesson-1

समास - प्रकरणम् ( Compound-Section )

In Sanskrit language there is a lot of use of compounds. The examples are as under—

| Compounds | Original (analysed) Sentence | Meaning |
|---|---|---|
| १ सूर्यकिरणः | = ( सूर्यस्य किरणः ) | = Sun's rays |
| २ वृक्षमूलम् | = ( वृक्षस्य मूलम् ) | = The root of the tree |
| ३ तद्रूपम् | = ( तस्य रूपम् ) | = Its form |

If the students observe the examples keenly, they will come to know, that the condensed form of the sentences is what is called समास or the compound.

+

Instead of saying an expanded sentence, 'सूर्यस्य किरणः a condensed form of it namely 'सूर्यकिरणः' will serve the purpose in Sanskrit. There is this advantage in the compounds. These compounds are of six kinds – as noted below—

१ द्वंद्व, २ द्विगु, ३ तत्पुरुष, ४ कर्मधारय, ५ बहुव्रीहि and ६ अव्ययीभाव.

Now see the exposition—

## द्वंद्व–समासः

In Sanskrit there are two kinds of Dwandwa used.

१ इतरेतरयोग-द्वंद्वसमास and
२ समाहार-द्वंद्वसमास.

The word 'इतरेतरयोग' means coming together of different objects. For example—

१ रामकृष्णौ = ( रामश्च कृष्णश्च ) Rama and Krishna.
२ रामलक्ष्मणभरतशत्रुघ्नाः = ( रामश्च लक्ष्मणश्च भरतश्च शत्रुघ्नश्च ) Rama, Lakshmana, Bharat and Shatrughna.
३ स्त्रीपुरुषौ = ( स्त्री च पुरुषश्च ) Woman and man.
४ हरिहरौ = ( हरिश्च हरश्च ) Hari and Hara.
५ इंद्रासोमौ = ( इंद्रश्च सोमश्च ) Indra and Soma.
६ मातापितरौ = ( माता च पिता च ) Mother and father. ( parents )
७ शीतोष्णे = ( शीतं च उष्णं च ) Cold and hot.

The students may observe here, that two objects are joined together there is the dual number in the compound word; and where there is a connection of three or more objects, there will be plural number. This 'द्वंद्व समास' is very easy and it is used again and again. Now see the use of this compound.

## संस्कृत वाक्यानि ।

१ तव मातापितरौ कुत्र गतौ ? २ मम मातापितरौ गृहं गतौ । ३ रामलक्ष्मणभरतशत्रुघ्नाः इदानीं किं कुर्वन्ति ? ४ रामलक्ष्मणभरतशत्रुघ्नाः इदानीं वनं गच्छन्ति । ५ गृहस्थाश्रमे स्त्रीपुरुषयोः संबंधः भवति ।

## English Sentences

1 Where did your parents go ? 2 My parents went home. 3 What are Rama, Lakshmana, Bharata and Shatrughna doing now ? 4 Rama, Lakshmana, Bharata and Shatrughna are going to the forest now. 5 In a house-holder's state there is relationship between men and women.

## समाहार द्वन्द्व-समास ।

The other kind of द्वंद्व समास is called 'समाहार द्वन्द्व.' There is the idea of being together collectively in this; and its use is always in the form of neuter gender in the singular number. Examples :—

१ पाणिपादमुखम् = ( पाणी च पादौ च मुखं च ) ( The collection or set of ) hands, legs and mouth.

२ गावाश्वम् = ( गावश्च अश्वाश्च ) Cows and horses.

३ दासीदासम् = ( दास्यश्च दासाश्च ) Maid and man servants.
४ शंखपटहम् = ( शंखश्च पटहश्च ) Conch and drum.
५ गंगाशोणम् = ( गंगा च शोणश्च ) ( The aggregate of ) the Ganga and the Shona.

In this way, this Compound is formed in the neuter gender singular number giving the meaning of, a collection, a set or an aggregate.

The meaning of the word 'च' is 'and'. This meaning is condensed in this compound and by removing thi word 'च' the compound is formed. So much is to be remembered in this respect. Now see—

| Slpit up Sentence | Translation | द्वंद्व Compound |
|---|---|---|
| रामश्च रावणश्च = | ( Rama and Ravana ) | = रामरावणौ |
| शिवश्च केशवश्च = | ( Shiva and Keshava ) | = शिवकेशवौ |
| व्याघ्रश्च सिंहश्च = | ( Tiger and Lion ) | = व्याघ्रसिंहौ |

The students can thus marke use of the द्वंद्व समास, because this is an easy compound. This is easy to grasp as well as to form. And see—

समासाः ।

कोकिलश्च मयूरश्च = कोकिलमयूरौ । ( पु. )
व्याघ्रश्च वराहश्च महिषश्च = व्याघ्रवराहमहिषाः ।
ब्राह्मणश्च क्षत्रियश्च वैश्यश्च शूद्रश्च = ब्राह्मणक्षत्रियवैश्यशूद्राः ।
इन्द्रश्च वरुणश्च = इन्द्रावरुणौ । ( द्रा becomes of द्र)
मित्रश्च वरुणश्च = मित्रावरुणौ । ( त्रा becomes of त्र )

धनं च धान्यं च = धनधान्ये । ( नपुं. )
मुद्गाश्च चणकाश्च गोधूमाश्च = मुद्गचणकगोधूमाः ।
अन्नं च पानीयं च = अन्नपानीये । ( नपुं. )

---

# Lesson – 2

## द्विगु–समासः ।

That compound in which the numeral pronoun comes first mostly, is called द्विगु समास । This is the ordinary sign to recognise it. It is therefore easy to recognise this compound and also to form it.

There are two kinds of this compound.

( १ ) एकवद्भावी द्विगुसमास and
( २ ) अनेकवद्भावी द्विगुसमास ।

### एकवद्भावी द्विगुसमासः ।

१ त्रिशृंगम् = (त्रयाणां शृंगाणां समाहारः)=A set of three horns.
२ पञ्चगवम् = (पञ्चानां गवां समाहारः) = A set of five cows.
३ पंचमूली = ( पंचानां मूलानां समाहारः )= A set of five roots
४ सप्तफली = (सप्तानां फलानां समाहारः )= A set of seven fruits
५ अष्टाध्यायी = (अष्टानां अध्यायानां समाहारः) = A set of eight chapters.

## अनेकवद्भावी द्विगुसमासः ।

१ सप्तर्षयः = ( सप्त च ते ऋषयश्च ) = Seven Rishis ( ऋषि पु. remains ).
२ चतुर्दिशः = ( चतस्रः च ताः दिशः च ) = four cardinal points ( दिश् स्त्री remains ).
३ त्रिलोकाः = ( त्रयः च ते लोकाः च ) = Three worlds ( लोक पु. remains )

## संस्कृत-वाचन-पाठः ।

### रामायणम् ।

१. अभियाय च तं इंगुदीवृक्षं सभार्यः सलक्ष्मणः रामः रथात् अवातरत् । तत्र गुहः नाम निषादराजः तस्य सखा आसीत् । सः अपि रामं आगतं श्रुत्वा आमात्यैः वृद्धैः च परिवृतः तत्र रामं उपगतः । चीरवल्कधारी रामः सायं संध्यां तत्र उपास्य लक्ष्मणेन आनीतं केवलं जलं एव भोजनार्थं आददे । वृक्षं आश्रित्य तत्रैव लक्ष्मणः तस्थौ । धनुर्धरः गुहः अपि सूतेन सह तत्रैव

---

1. Having gone up to the celastrus tree, Rama with his wife and Lakshmana, got down from the Charist. There was his friend, Guha by name, who was the king of the Nishadas. He, having heard that Rama had come, came to him surrounded with his ministers and elders. Rama, the wearer of bark cloth, having finished his evening meditation there, took only the water brought by Lakshmana for food. Lakshmana, with the tree as support stood there only. Guha also wearing bow. stopped there along with the charioteer. When day

स्थितः । प्रभातायां शर्वर्यां रामः उवाच 'तराम जाह्नवीं' इति । रामलक्ष्मणौ सीतया सह गंगां जग्मतुः । तं प्राञ्जलिः सूतः धर्मज्ञं रामं उवाच– 'किं अहं इदानीं करवाणि' इति । रामः तं प्रत्युवाच 'राजानं अभिवाद्य ब्रूयाः । न अहं न च लक्ष्मणः अनुशोचाति वनवासम् । चतुर्दशवर्षेषु निवृत्तेषु नः सर्वान् पुनरागतान् द्रक्ष्यसे इति ।'

२ 'हे सुमंत्र ! राजानं मातरं कैकेयीं अन्याश्च देवीः पुनः पुनरुक्त्वा, अथ कौसल्यां सीतायाः मम लक्ष्मणस्य च वचनाद् आरोग्यं पादाभिवंदनम् च ब्रूहि । कथय च । नाभिभविष्यति त्वां दुःखं अस्मत्संतापजम् । भरतश्च अपि वक्तव्यः यथा राजनि वर्तसे तथा सर्वासु मातृषु अविशेषतः वर्तेथाः ।' एवं सूतं पुनः पुनः सांत्वयित्वा पश्चात् गुहं वचनं अब्रवीत्– 'हे गुह ! इदानीं सजने वने मे वासः न योग्यः । अतः आनय न्यग्रोधक्षीरं' इति । गुहः च राजपुत्राय तत् क्षिप्रं क्षिरं उपाहरत् । रामः अपि तेन

---

dawned after the night. Rama said we shall cross the river Jahnavi ( Ganga ). Rama and Lakshmana, with Sita, went to the Ganga. Then the charioteer, with folded hands told Rama, the knower of Duties, " what shall I do now. " Rama replied him– " Say to the king with our salutation, I do not feel sorry for the dwelling in the forest nor does Lakshmana. You shall see ( us ) all returned after the lapse of fourteen years. "

2. O Sumantra, having told the King, mother, Kaikeyee and other ladies repeatedly, tell Kausalya, Sita's, Lakshmana's and my words namely our bowing to her feet and our health, and tell also let there be no more sorrow on account of us. Bharata also is to be

जटाः अकरोत्। नदीतीरे स्थितां नावं दृष्ट्वा तत्र पूर्वं सीतां आरोप्य ततः स्वयं सलक्ष्मणः आरुरोह। ततः सा शुभा नौका शीघ्रं सलिलं अत्यगाद्। अन्यं तीरं संप्राप्य ते सर्वे नावं हित्वा प्रातिष्ठन्त। रामः तदा लक्ष्मणं आह– 'सौमित्रे! त्वं अग्रतः गच्छ, सीता त्वां अनुगच्छतु। अहं सीतां अनुपालयन् पृष्ठतः गच्छामि। अस्माभिः अन्योऽन्यस्य रक्षा कर्तव्या। वनवासस्य दुःखं वैदेही अद्य वेत्स्यति।'

३ प्रातः उत्थाय महर्षिं अभिवाद्य ते अग्रे जग्मुः। महर्षिश्च तेषां स्वस्त्ययनं चकार। तान् राज्ञः औरसान् पुत्रान् प्रस्थितान् प्रेक्ष्य

---

informed. Just as you behave with the king so also with all the mothers without exception. Thus consoling the charioteer again and again, then he told Guha– " O Guha, it is not right for me to live in a jungle with men. Therefore bring the milk of the banyan tree. " Than Guha brought that milk for the king's son soon. Then Rama made his hair matted with it; then seeing the boat standing in the bank of the river, he made Sita get into it first, then he and Lakshmana got in. Then that good boat, soon crossed the waters. Getting into the other bank, they left the boat and began to walk. Then Rama said to Lakshmana. " O Lakshmana, you go first, let Sita follow you, I shall go behind Sita protecting her. Each should do the protection of the other among us. Vaidehi will now realise the difficulty of living in a jungle.

3 Rama spent that night in the hermitage of Bharadwaja. Getting up in the morning, bowing down

चित्रकूटस्य रम्यं पंथानं आदिश्य, महर्षिः न्यवर्तत । कालिंदीं नदीं आसाद्य सद्यः तितीर्षवः चिंतां आपेदिरे । ततः तौ रामलक्ष्मणौ काष्ठसंघाटं सुमहाप्लवं चक्रतुः । लक्ष्मणः सीतायाः सुखं आसनं चकार । ततः रामः लज्जमानां तां सीतां प्लवं प्रथमं अध्यारोपयत् । पश्चात् स्वयं लक्ष्मणेन सह आरुह्य, प्लवं उत्सृज्य, अग्रे अगच्छत् ।

---

to the Maharshi, they went forward. Maharshi also blessed them. The Maharshi seeing the own sons of the king starting, showed the pleasant road to Chitrakoota and returned.

Having seen the River Kalindy, wishing to cross it at once, began to think what to do. Then Rama and Lakshmana, constructed a broad raft, connecting pieces of wood, Lakshmana made a good seat for Sita. Then Rama caused the shying Sita to get into the raft first; then he got in along with Lakshmana, let the raft go and went forward.

### समासाः ।

१ सभार्यः = भार्यया सहितः । ( सहार्थी बहु. )

२ सलक्ष्मणः = लक्ष्मणेन सहितः । ( सहार्थी बहु. )

३ चीरवस्त्रधारी = चीरं च वस्त्रं च चीरवस्त्रे, ( द्वंद्व ) चीरवस्त्रे धारयति इति चीरवस्त्रधारी । ( उप. तत्पु. )

४ धनुर्धरः = धनुः धारयति इति ।

५ राम–लक्ष्मणौ = रामश्च लक्ष्मणश्च ।

६ वनवासः = वने वासः ।

७ चतुर्दशवर्षाणि = चतुर्दश च तानि वर्षाणि च । अथवा चतुर्दश वर्षाणाम् समाहारः ।

८ पादाभिवन्दनं = पादयोः अभिवंदनम् ।
९ अस्मत्संतापजं = अस्माकं संतापः अस्मत्संतापः, अस्मत्संतापात् जातम् ।
१० सजनम् = जनेन सहितं ।
११ निर्जनम् = निर्गतः जनः यस्मात् ।
१२ राजपुत्रः = राज्ञः पुत्रः ।

द्वंद्व समास = रामलक्ष्मणौ, चीरवस्त्रे ।
द्विगु समास = चतुर्दशवर्षाणि ।

In this way try to analyse the following compounds.

१ सपुत्रः । सवस्त्रः । सनेत्रः । नेत्राभ्याम् सहितः ।
२ मनुष्यराजः । पशुपतिः । वनचरराजः । नक्षत्रेशः ।
३ शस्त्रधारी । वस्त्रधारी ।
४ गृहवासः । जलनिवासः । वृक्षनिवासः ।

## Sentences with sandhi

१ रामस्तां रात्रीं भरद्वाजाश्रमे सुखमवसत् । भरद्वाजाश्रमेऽवसत्सुखं रामस्तां रात्रीम् ।

२ महर्षिश्चकार तेषां स्वस्त्ययनम् । चकार महर्षिस्तेषां स्वस्त्ययनम् ।

---

# Lesson 3

## तत्पुरुष समासः ।

There are Eight kinds of तत्पुरुष समास —

१ प्रथमा–तत्पुरुष । २ द्वितीया–तत्पुरुष ३ तृतीया-तत्पुरुष । ४ चतुर्थी–तत्पुरुष । ५ पंचमी–तत्पुरुष । ६ षष्ठी – तत्पुरुष । ७ सप्तमी–तत्पुरुष । ८ नञ् तत्पुरुषः ।

See their examples—

( १ ) प्रथमा तत्पुरुषः ।

१ मध्याह्नः = ( मध्यः अह्नः ) = The middle day
१ मध्यरात्रः = ( मध्य रात्रेः ) = The middle night
३ प्रातजीविकः = ( प्राप्तः जीविका ) = he who got his living

( २ ) द्वितीया–तत्पुरुषः ।

१ ग्रामगतः = ( ग्रामं गतः ) = gone to the village
२ दुःखातीतः = ( दुःखं अतीतः ) = beyond sorrow

( ३ ) तृतीया–तत्पुरुषः ।

१ मातृसदृशः = ( मात्रा सदृशः ) = mother like
२ पितृसमः = ( पित्रा समः ) = father like
३ गुडसंमिश्रितः = ( गुडेन संमिश्रितः ) = mixed with jaggery

( ४ ) चतुर्थी–तत्पुरुषः ।

१ यूपदारु = ( यूपाय दारु ) = wood for flag
२ मुद्रिकासुवर्णं = ( मुद्रिकायै सुवर्णं ) = gold for a ring
३ भूतबलिः = ( भूतेभ्यः बलिः ) = food for animal

( ५ ) पंचमी-तत्पुरुषः ।

१ सिंहभयं = ( सिंहात् भयं ) = fear from lion
२ दुःखमुक्तः = ( दुःखात् मुक्तः ) = Void of sorrow

( ६ ) षष्ठी-तत्पुरुषः ।

१ राजपुरुषः = ( राज्ञः पुरुषः ) = King's servant
२ पृथिवीपतिः = ( पृथिव्याः पतिः ) = Earth's master
३ देवपूजकः = ( देवस्य पूजकः ) = God worshipper

(७) सप्तमी-तत्पुरुषः।

१ विद्याप्रवीणः = ( विद्यायां प्रवीणः ) = adept in learning
२ वाक्पटुः = ( वाचि पटुः ) = adept in speech

(८) नञ्तत्पुरुषः।

१ अविद्वान् = ( न विद्वान् ) = he who is not a learned
२ अनीशः = ( न ईशः ) = he who is not the master

Student seeing these forms of तत्पुरुष can understand that while analysing the compounds, because of the case endings such as of Nominative, of subjective etc, each compound is called as such i. c. प्रथमा तत्पुरुष, द्वितीया तत्पुरुष etc:

In नञ्तत्पुरुष the word अ which means 'not' is at the beginning.

By remembering so much, students will acquaint themselves with तत्पुरुष समास.

Now read a little—

संस्कृत–वाचन–पाठः।

रामायणम्।

रामः अब्रवीत्—वैदेहि ! सर्वान् नगान् पुष्पितान् पश्य। नरैः अनुपसेवितान् फलपुष्पैः च अवनतान् बिल्वान् भल्लातकान् पश्य। नूनं अत्र वयं शक्ष्याम आजीवितुम्। एष कोकिलः कूजति। शिखी तं प्रतिकूजति। पश्य, इमं रम्यं चित्रकूटं यस्य काननेषु रंस्यामहे इति। रम्यं चित्रकूटं आसाद्य तत्र वाल्मीकिं अभिवाद्य ते उपविविशुः।

---

Rama said to Sita–' See the mountains, how they are full of flowers. See also the Bilva trees and Ballathaka trees which are hanging down with flowers and fruits, as they have not been used by man. Surely we can dwell here. Here the cuckoo sings; the peocock answers the

महर्षिः तान् पूजयामास। ततः रामः लक्ष्मणं अब्रवीत्- लक्ष्मण ! रुचिरं आवसथं कुरुष्व इति। लक्ष्मणः पर्णशालां चक्रे। रामः स्नात्वा देवयजनं अकरोत्, विवेश च पर्णशालां। रम्यं चित्रकूटं, माल्यवतीं नदीं च आसाद्य राघवः ननन्द। पुरविप्रवासस्य दुःखं जहौ च।

---

song. See this pleasant Chitrakoota in the forests of which we shall be happy. Having got to the pleasant Chitrakoota and having bowed down to Rishi Valmiki, they sat down. The Maharshi honoured them. Then Rama said to Lakshmana– ' O Lakshmana, make a good dwelling place. ' Lakshmana constructed a hermitage. Rama, having bathed, performed Devayajna and entered the hermitage. Raghva having come to the pleasant Chitrakoot and the river Malyavathi, became very happy and gave up the sorrow born of coming away from the city.

## समासाः ।

| | |
|---|---|
| १ अनुपसेवितः | = न उपसेवितः । |
| २ फलपुष्पे | = फलं च पुष्पं च । |
| ३ मातापितरौ | = माता च पिता च । |
| ४ गृहस्थः | = गृहे तिष्ठति इति गृहस्थः । |
| ५ मयूरकाकौ | = मयूरश्च काकश्च । |
| ६ सलक्ष्मणः | = लक्ष्मणेन सहितः । |
| ७ चीरवस्त्रधारी | = चीरवस्त्रं धरतीति । |
| ८ धनुर्धरः | = धनुः धरतीति । |
| ९ पादाभिवंदनं | = पादयोः अभिवंदनम् । |
| १० संतापजं | = संतापात् जातम् । |
| ११ न्यग्रोधक्षीरं | = न्यग्रोधस्य क्षीरम् । |

# Lesson – 4

## संस्कृत–वाचन–पाठः ।

### रामायणम् ।

अथ सुमंत्रः दुर्मना भूत्वा निरानंदां अयोध्यां प्रययौ । अभिधावन्तः सहस्रशः नराः सुमंत्रं अभ्यद्रवन् पृच्छन्तः च 'क्व राम' इति । सीतारामलक्ष्मणाः गंगापारं गताः इति विज्ञाय च 'हा राम ! हा राम ! ' इति विचुक्रुशुः । स वातायनगतानां स्त्रीणां च परिदेवनां शुश्राव । राजवेश्म प्रविश्य आतुरं राजानं अपश्यत् ।

यथोक्तं रामवचनं राजानं प्रणिपत्य प्रत्यवेदयत् । राजा तु तत् श्रुत्वा मूर्च्छितः भूत्वा भूमौ न्यपतत् । सर्वं अन्तःपुरं तदा आविद्धम् । रामे वनं प्रव्राजिते अथ षष्ठीं रजनीं अर्धरात्रे राजा पुनः पूर्वं कृतं दुष्कृतं अस्मरत् । कौसल्यां च अब्रवीत् । देवि ! यदा त्वं

---

Then Sumantra with a dejected mind, entered Ayodhya, devoid of pleasure. Thousands of people came running to Sumantra and asked where is Rama; coming to know that Sita, Rama and Lakshmana went away to the other bank of the Ganga, they all cried out " O Rama, O Rama " ! He also heard the vailing of women who had come up to the windows. Entering the palace saw the sick king. Having bowed down to the king he informed all that was said by Rama.

The king hearing this fell down on the ground senseless. The whole interior of the palace was struck with sorrow. On the sixth night of Rama's going to the forest, the king remembered again the sin committed by him long

अनूढा अभवः अहं च युवराजः। तदा प्रावृट् समयः प्राप्तः। अतिसुखे तस्मिन् काले सरयूं नदीं अहं अन्वगाम्। यद् अहं रात्रौ निपाने अभ्यागतं महिषं गजं मृगं वा हन्तुं लभेय इति। अन्धकारे तु तदा वारणस्य इव जले नर्दतः घोषं अश्रौषम्। ततः गजप्रेप्सुः दीप्तं शरं उद्धृत्य अपातयम्। तदा कस्य अपि व्यक्ता वाक् प्रादुरासीत् 'कथं मद्विधस्य ऋषेः वधः विधीयते। न अहं मम जीवितक्षयं अनुशोचामि। अपि तु मातरं च पितरं च अनुशोचामि।' श्रुत्वा तां करुणां वाचं व्यथितस्य मे कराभ्यां सशरं चापं भुवि अपतत्। दुर्मनाः तं देशं गत्वा, तत्र इषुणा हतं तापसं अपश्यम्। स तापसः मां उवाच। 'मम पितुः अयं आश्रमः, इतः स्थानात् एकपदी एव केवलम्। त्वं तत्र गच्छ, तं प्रसादाय च। संकुपितः सः त्वां न शपेत्। मां च विशल्यं कुरु।' ततः अहं बाणं उपह-

ago and said to Kausalya— 'O lady! when you were unmarried, I was the heir-apparent. There was rainy season then. During that pleasant. time, I went to the river Sarayu, so that I could kill the forest buffalow or the elephant or the deer that would come to drink water in the night. In the darkness, I heard a sound as if an elephant was making noise in the water. Then I desiring the elephant taking a sharp arrow hit it. At that time, I heard a clear voice of an individual " How is it that the death of a Rishi like me is being done; I do not vail my losing my life but I vail on account of my parents. Hearing that piteous cry, the bow with the arrow dropped to the ground from my hands, as I was stricken with remorse. With a dejected mind I went to that place and saw an asectic, who had been killed with the arrow. The asectic toldme "Here is the hermitage of my father It is only a

रम्, स तपोधनः सद्यः प्राणान् जहौ। अहं अपि यथा आख्यातं जलपूर्णं घटं आदाय आश्रमपथं गतः। यत्र अहं अपश्यं तस्य वृद्धौ अन्धौ च पितरौ। मम पदशब्दं श्रुत्वा एव मुनिः अभाषत, 'किं पुत्र! चिरयसि? आनय क्षिप्रं पानीयम्। कथं न अभिभाषसे?' इति। तदा मया तस्य पुत्रस्य मरणं निवेदितम्। असौ तदा उवाच माम् 'नय नौ तं एव देशं, तथाविधं पुत्रं द्रष्टुं इच्छावः।' ततः, अहं एकः सभार्यं मुनिं तत्र नीत्वा पुत्रं अस्पर्शयम्। तौ पुत्रं स्पृष्ट्वा तस्य शरीरे निपेततुः। स मुनिः शोकसंतप्तः तदा मां आह– 'हे राजन्! मे शापात् त्वं एवं पुत्रशोकेन कालं गमिष्यसि।" एवं मां शापं दत्त्वा तत् मिथुनं स्वर्गं अगात्। अद्य तत् पापं मया इदानीं स्मृतम्। तस्य पापकर्मणः एव अयं विपाकः।

---

foot away from this place. You go there and please him; he will not curse you out of anger. Make me arrow-less." Then I took off the arrow. That ascetic where wealth was penance, immediately gave up his life. I too taking the earthern ware full of water went to the hermitage as was asked. There I saw his parents both, old and blind. Hearing the sounds of my feet only the ascetic said–why son, have you delayed ? bring the water soon. Why do you not talk ? ' Then I meeckly narrated the death of his son. Then he said to me, " lead us both now to that place. We want to see the son in that condition.' Then I alone, lead the muni with his wife and caused them to touch their son. Then touching their son, they fell on the body. The muni, burnt with sorrow, said–due to my curse you will end your life in this way in the grief for your son. Cursing me in this way, both of them went to heavan. That sin has been remembered by me today. This is the result of that sin.

## समासाः ।

द्वंद्व-समास- सीतारामलक्ष्मणः ( सीता च रामश्च लक्ष्मणश्च )

तत्पुरुष—( नञ्तत्पुरुष ) = १ अयोध्या = ( न योध्या )

२ अनूढा = ( न ऊढा )

[ तृतीयातत्पुरुष ] = शोकसंततः = ( शोकेन संतप्तः )

[ षष्ठीतत्पुरुष ] = १ गंगापारः = ( गंगायाः पारः )

२ राजवेश्म = ( राज्ञः वेश्म )

३ रामवचनं = ( रामस्य वचनं )

४ जीवितक्षयः = ( जीवितस्य क्षयः )

५ पदशब्दः = ( पादयोः शब्दः )

६ पुत्रशोकः = ( पुत्रस्य शोकः )

७ पर्णशाला = ( पर्णानां शाला )

८ देवयजनं = ( देवानां यजनं )

९ पुरविप्रवासः = ( पुरस्व वि-प्रवासः )

[ सप्तमीतत्पुरुषः ] = वातायनगता = ( वातायने गता )

Try to analyse ( split up ) the following compounds.

द्वंद्वसमास = फलपुष्पे

नञ्तत्पुरुष = असेवितः ।

तृतीयातत्पुरुष = हरिकृतः ।

चतुर्थीतत्पुरुष = जनहितम् ।

पंचमीतत्पुरुष = नगरविप्रवास ।

षष्ठीतत्पुरुष = पत्रशाला । देवयजनं ।

From the compounds of the following split up sentences.

पुरुषस्य वाक्यम् । राज्ञः गृहम् ।

मनुष्यस्य रूपम् । नरस्य हस्तः ।

देवानां ईशः । चक्रस्य गतिः ।

# Lesson — 5

## बहुव्रीहि–समासः ।

There are seven principal kinds of 'बहुव्रीहि समास.' (१) द्विपदबहुव्रीहिः. (२) बहुपदबहुव्रीहिः, (३) संख्योत्तरपदबहुव्रीहिः, (४) संख्योभयपदबहुव्रीहिः, (५) सहपूर्वपदबहुव्रीहिः, (६) व्यतीहारलक्षणो बहुव्रीहिः, (७) दिगंतराललक्षणो बहुव्रीहिः ।

Again there are six kinds of this द्विपद बहुव्रीहि। The examples are as under—

### (१) द्वितीया बहुव्रीहिः ।

१ प्राप्तोदकः = प्राप्तं उदकं यं सः प्राप्तोदकः (ग्रामः) = That which has got water (village)

२ आरूढवानरः= आरूढः वानरः यं (वृक्षं) स आरूढवानरः (वृक्षः) = that tree in which monkey has got up

### (२) तृतीया बहुव्रीहिः ।

१ निर्जितकामः = निर्जितः कामः येन सः निर्जितकामः (शंकर) = he who has defeated the Cupid

२ प्राप्तविद्यः = प्राप्ता विद्या येन = he who has achieved learning

### (३) चतुर्थी बहुव्रीहिः ।

१ उपनीतभोजनः = उपनीतं भोजनं यस्मै = fort whom food is kept near

२ उपहृतधान्यः = उपहृतं धान्यं यस्मै = for whom the grains have been brought

( ४ ) पंचमी बहुव्रीहिः।

१ निष्क्रान्तजनः = निष्क्रान्तः जनः यस्मात् = from where all the men have gone ( that village )

२ उद्धृतौदनः = उद्धृतः ओदनः यस्मात् = from where all the boiled rice has been taken away

३ समाप्तजलः = समाप्तं जलं यस्मात् = from which all water is finished ( such a well )

( ५ ) षष्ठी बहुव्रीहिः।

१ शुक्लपटः = शुक्लः पटः यस्य = he who has white cloth

२ लंबकर्णः = लंबौ कर्णौ यस्य = which has got long ears ( The monkey. )

( ६ ) सप्तमी बहुव्रीहिः।

१ वीरपुरुषः = वीराः पुरुषाः यस्मिन् = In which are brave men ( such a village )

२ संचितजलं = संचितं जलं यस्मिन् = in which water has been collected ( such a vessel )

३ बहुजनः = बहवः जनाः यस्मिन् = in which there are great many men ( such a city )

These are the examples of the द्विपद बहुव्रीहि। The peculiarity in the 'बहुव्रीहि' compound is that those words that are in the sentence of the compound point out a distinctly separate thing from themselves. For instance, take the word 'पीतांबरः ( पीतः अम्बरं यस्य ) i. e. that man whose cloth is of yellow colour. This denotes a distinctly sepenate man ( such as Krishna, Vishnu etc. )

Let the students remember this peculiarity and try to recognise the compounds spoken of previously.

## Sentences with sandhi

नरैरनुपसेवितान्फलपुष्पैश्चावनतान् ! बिल्वान्भल्लातकान्पश्य । नूनमत्र वयं शक्ष्यामाजीवितुम् । एत्र कोकिलः कूजति । शिखी तं प्रतिकूजति । पश्येमं रम्यं चित्रकूटं यस्य काननेषु रंस्यामहे इति । रम्यं चित्रकूटमासाद्य तत्र वाल्मीकिमभिवाद्योपविविशुः ।

Now we give here examples of the other kinds of "बहुव्रीहि."

### बहुपदबहुव्रीहिः समासः ।

In the बहुव्रीहि mentioned before there are only two words. But in this there are more than two; in this too, a distinctly separate thing is denoted by the words of the sentence explaining the compound. Examples--

१ पराक्रमोपार्जितसंपत् = पराक्रमेण उपार्जिता संपद् येन सः पराक्रमोपार्जितसंपद् = he who has acquired the wealth by valour ( such a brave man )

२ बाहुबलनिर्जितशत्रुः = बाहुबलेन निर्जिताः शत्रवः येन सः बाहुबलनिर्जितशत्रुः = he who has defeated his foes through the power of his arms ( such a powerful man )

३ अन्यायोपार्जितधनः = अन्यायेन उपार्जितं धनं येन सः अन्यायोपार्जितधनः = he who has acquired wealth by foul means ( such a sinful man )

In this way other examples should be understood. It is hoped that the students will recognise this compound in this way. There are more than two words and a distinctly separate thing is denoted by them.

### संख्योत्तरपद-बहुव्रीहिः समासः ।

In this Compound, the second word is a numeral. For example--

१ उपदशाः = उप समीपे दशानां सन्ति ये ते उपदशाः । = They who are by the side of ten men are called उपदशाः

In this way ( 2 ) उपविंश ( 3 ) उपशत etc. are formed which are called संख्योत्तरपद बहुव्रीहि compounds.

संख्योभयपद-बहुव्रीहिः

In this, both the words are numerals For ex--

१ द्वित्रा = द्वौ वा त्रयो वा = Two or three

२ द्विदशाः = द्विरावृत्ता दश = Twice ten.

In this way this बहुव्रीहि compound is formed. Both the words in this are numerals. Therefore it is easily recognised. Now see—

सहार्थी-सहपूर्वपद-बहुव्रीहिः ।

In this बहुव्रीहि, the word 'सह' giving the meaning 'with' is fromed in the I st place. For example--

१ समूलः = मूलेन सह वर्तते इति समूलः = that which exists along with the root, or origin

२ सकेशः = केशैः सह भवति इति = He or she who is with hair.

In this, the order is topsy-turvy, or changable idea. For example—

व्यतिहारलक्षणः बहुव्रीहिः ।

१ केशाकेशि = केशेषु केशेषु गृहीत्वा यत् युद्धं प्रवृत्तं तत् केशाकेशि = the fight that is done, the opponents catching each other's hair is केशोकेशि.

२ दण्डादण्डि = दण्डैः दण्डैः प्रहृत्य यत् युद्धं प्रवृतं तत् दण्डादण्डि = The fight that is done, the opponents beating each other with sticks and rods, is called "दण्डादण्डि."

Now there is one बहुव्रीहि remaining and that is called

### दिगन्तराललक्षण- बहुव्रीहिः ।

In this, the space between two cardinal points is denoted. Thus–

**दक्षिणपूर्वा** – दक्षिणस्याः पूर्वस्याश्च दिशोः यत् अंतरालं सा दक्षिण-पूर्वा = The space between the east and the south is called **दक्षिणापूर्वा,**

## Note

All these compounds are easy to learn, provided that the students apply themselves with cosideration and thanking and practice, the knowledge by the बहुव्रीहि समास is gained by this much of explanation. There will be no difficulty for them.

In Sanskrit language, there is a great use of the बहुव्रीहि समास. From the utilisation point of view, the use तत्पुरुष and बहुव्रिहि compounds is great. Therefore it is right that the students should study. These well and enter the temple of Sanskrit literature easily.

## Sentences with sandhi

महर्षिस्तान्पूजयामास । ततो रामो लक्ष्मणब्रवीत् ' लक्ष्मण ! रुचिरमावसथं कुरुष्वेति । ' लक्ष्मणोऽपि पर्णशालां चक्रे । रामः स्नात्वा देवयजनमकरोत् । विवेश च पर्णशालाम् । रम्यं चित्रकूटं माल्यवतीं नदीं चासाद्य राघवो ननन्द । पुरविप्रवासस्य दुःखं जहौ च । अथ सुमन्त्रो दुर्मना भूत्वा निरानन्दामयोध्यां प्रययौ । अभिधावन्तः सहस्रशो नराः सुमंत्रमभ्यद्रवन् पृच्छन्तश्च ' क राम ' इति । सीतारामलक्ष्मणा गंगापारंगता इति विज्ञाय च ' हा राम ! हा राम ! ' इति विचुक्रुशुः । स वातायनगतानां स्त्रीणां च परिदेवनां शुश्राव ।

# Lesson – 6

In this lesson, the story of Ramayana, given previously is repeated, but in easy Sanskrit sentences with sandhis joined. If the students have done the previous lessons well, there will be no difficulty in understanding these sentences.

## संस्कृत–वाचन–पाठः ।

### रामायणम्

( १ )

अभियाय च तमिंगुदीवृक्षं सभार्यः सलक्ष्मणो रामो रथादवातरत् । तत्र गुहो नाम निषादराजस्तस्य सखाऽऽसीत् । सोऽपि राममागतं श्रुत्वाऽमात्यैर्वृद्धैश्च परिवृतस्तत्र राममुपगतः । चीरवस्त्रधारी रामः सायं संध्यां तत्रोपास्य लक्ष्मणेनाऽनीतं केवलं जलमेव भोजनार्थमाददे । वृक्षमाश्रित्य तत्रैव सलक्ष्मणस्तस्थौ । धनुर्धरो गुहोऽपि सूतेन सह तत्रैव स्थितः । प्रभातायां शर्वर्यां राम उवाच— ‘ तराम जाह्नवीं ’ इति । रामलक्ष्मणौ सीतया सह गंगां जग्मतुः । प्राञ्जलिः सूतो धर्मज्ञं राममुवाच— ‘ किमहमिदानीं करवाणि ’ इति । रामस्तं प्रत्युवाच — ‘ राजानमभिवाद्य ब्रूयाः । नाऽहं न च लक्ष्मणोऽनुशोचति वनवासम् । चतुर्दशवर्षेषु मः निवृत्तेषु सर्वान् पुनरागतान्द्रक्ष्यसे ’ इति ।

‘ हे सुमंत्र ! राजानं मातरं कैकेयीमन्याश्च देवीः पुनः पुनरुक्त्वा अथ कौसल्यां सीताया मम लक्ष्मणस्य च वचनादारोग्यं पादाऽभिवंदनं च ब्रूहि । कथय च, नाभिभविष्यति त्वां दुःखमस्मत्संतापजम् । भरतश्चाऽपि वक्तव्यो ' यथा राजनि वर्तसे तथा सर्वासु

मातृष्वविशेषतो वर्तेथाः ।' एवं सूतं पुनः पुनः सांत्वयित्वा पश्चाद् गुहं वचनमब्रवीत्– 'हे गुह ! इदानीं सजने वने मे वासो न योग्यः । निर्जने वने वासोऽवश्यं कर्तव्यः । अत आनय न्यग्रोधक्षीरम्' इति । गुहश्च राजपुत्राय तत् क्षिप्रं क्षीरमुपाहरत् रामोऽपि तेन जटां अकरोत् । नदीतीरे स्थितां नावं दृष्ट्वा तत्र पूर्वं सीतामारोप्य ततः स्वयं सलक्ष्मण आरुरोह । ततः सा शुभा नौका शीघ्रं सलिलमत्यगात् । अन्यं तीरं संप्राप्य ते सर्वे नावं हित्वा प्रातिष्ठन्त । रामस्तदा लक्ष्मणमाह– 'सौमित्रे ! त्वमग्रतो गच्छ, सीता त्वामनुगच्छतु । अहं सीतामनुपालयन् पृष्ठतो गच्छामि । अस्माभिरन्योऽन्यस्य रक्षा कर्तव्या । वनवासस्य दुःखं वैदेह्यद्य वेत्स्यति ।'

प्रातरुत्थाय महर्षिमभिवाद्य तावग्रे जग्मतुः । तान्राज्ञ औरसान्पुत्रान्प्रस्थितान्प्रेक्ष्य चित्रकूटस्य रम्यं पंथानमादिश्य महर्षिन्यवर्तत । कालिंदीं नदीमासाद्य सद्यस्तितीर्षवश्चिन्तामापेदिरे । ततस्तौ रामलक्ष्मणौ काष्ठसंघातं सुमहाप्लवं चक्रतुः, पश्चात्स्वयं रामः लक्ष्मणेन सहारुह्य प्लवमुत्सृज्य अग्रेऽगच्छत् ।

( २ )

रामः सीतामब्रवीत् 'वैदेही ! सर्वान्नगान्पुष्पितान्पश्य । नरैरुपसेवितान्फलपुष्पैश्चाऽवनतान्बिल्वान्भल्लातकान्पश्य । नूनमत्र वयं शक्ष्यामाजीवितुम्' इति । रम्यं चित्रकूटमासाद्य तत्र वाल्मीकिमभिवाद्योपविविशुः । महर्षिस्तान्पूजयामास । लक्ष्मणः पर्णशालां चक्रे । रामः स्नात्वा देवयजनमकरोद्विवेश च पर्णशालां । रम्यं चित्रकूटं माल्यवतीं नदीं चासाद्य राघवो ननन्द । पुरविप्रवासस्य दुःखं जहौ च ।

( ३ )

अभिधावन्तः सहस्रशो नराः सुमंत्रमभ्यद्रवन्पृच्छन्तश्च 'क्व राम, इति । सीतारामलक्ष्मणा गंगापारं गता इति विज्ञाय च 'हा

राम, हा राम ' इति विचुक्रुशुः । सर्वमन्तःपुरं तदाऽऽविद्धम् । रामे वनं प्रव्रजितेऽथ षष्ठीं रजनीं अर्धरात्रे राजा पुनः पूर्वं कृतं दुष्कृतमस्मरत् । कौसल्यां चाब्रवीत्, 'देवि ! यदा त्वमनूढाऽभवोऽहं च युवराजः, तदा प्रावृट्समयः प्राप्तः । यदहं रात्रौ निपानेऽन्वागतं महिषं गजं मृगं वा हन्तुं लभेयेति सरयूतीरमगच्छम् । अन्धकारे तु तदा वारणस्येव जले नर्दतो घोषमश्रौषम् । ततो गजप्रेप्सु र्दीप्तं शरमुद्धृत्यापाऽतयम् । तदा कस्यापि व्यक्ता वाक्प्रादुरासीत्– 'कथं मद्विधस्यर्षेर्वधो विधीयते ? नाहं मम जीवितक्षयमनुशोचामि, अपितु मातरं च पितरञ्चाऽनुशोचामि ।' श्रुत्वा तां करुणां वाचं व्यथितस्य मे कराभ्यां सशरं चापं भुव्यपतत् । दुर्मनास्तं देशं गत्वा तत्रेषुणा हतं तापसमपश्यम् । स तापसो मामुवाच– 'मम पितुरमाश्रमः इतः स्थानादेकपद्येव केवलम् । त्वं तत्र गच्छ तं प्रसादाय च । संकुपितः स त्वां न शपेत् । मां च विशल्यं कुरु । ' ततोऽहं बाणमुदहरम्, स तपोधनः सद्यः प्राणाञ्जहौ । अहमपि यथाख्यातं जलपूर्णं घटमादायाऽऽश्रमपथं गतः । तत्राहमपश्यं तस्य वृद्धावन्धौ च पितरौ । मम पदशब्दं श्रुत्वैव मुनिरभाषत – 'किं पुत्र ! चिरयसि ? आनय क्षिप्रं पानीयम् । कथं नाभिभाषस, इति । ' तदा मया तस्य पुत्रस्य मरणं निवेदितम् । असौ तदोवाच माम् । 'नय नौ तमेव देशं तथाविधं पुत्रं द्रष्टुमिच्छावः । ' ततोऽहमेकः सभार्यं मुनिं तत्र नीत्वा पुत्रमस्पर्शम् । स मुनिः शोकसंतप्तस्तदा मामाह 'हे राजन् ! मे शापात्त्वमेवं पुत्रशोकेनैव कालं गमिष्यसि । ' एवं मां शापं दत्त्वा तन्मिथुनं स्वर्गमगात् । अद्य तत्पापं मयेदानीं स्मृतम् । तस्य पापकर्मण एवायं विपाकः ।

## Note

Let the students practise this with a special alppllcation and if there is any difficulty felt, let them see the previous lesson.

## समासाः ।

सभार्यः = भार्यया सहितः ।
रामलक्ष्मणौ = रामश्च लक्ष्मणश्च ।
निषादराजः = निषादानां राजा ।
महर्षिः = महान् च असौ ऋषिः च ।
पादाभिवंदनं = पादयोः अभिवंदनम् ।

## श्लोक

न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् ।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ ( गीता ३।५ )

( कः श्चित् ) Any body ( क्षणं अपि ) even for a moment ( अकर्मकृत् ) Without doing anything ( जातु न हि तिष्ठति ) Cannot live (सर्वः) All men ( प्रकृतिजैः गुणैः ) by virtnes born of nature ( अवशः ) being dependent (कर्म हि कार्यते) do the work.

# Lesson – 7

## कर्मधारय–समासः ।

There are seven kinds of कर्मधारय समास; we shall give their names and examples here.

### ( १ ) विशेषणपूर्वपद–कर्मधारयः ।

In this, the first word is an adjective and second word is a noun. For example—

१ कृष्णसर्पः = ( कृष्णश्च असौ सर्पश्च ) = Black serpent
२ नीलवस्त्रं = ( नीलं च तत् वस्त्रं च ) = Blue cloth

In this, कृष्ण, नील (Black, Blue,) are adjectives because they are denoting qualities; and these are showing the qualities, in order, of serpent, (सर्पः) cloth (वस्त्रं) The latter are therefore nouns. ( विशेष्य ). In this way it is easy to recognise this componnd.

( २ ) विशेष्यपूर्वपद-कर्मधारयः ।

In this, the condition mentioned in the above compound is reversed. In this the noun ( विशेष्य ) comes first, and the adjective comes next, i.e. the first, word is noun; and the second is adjective; and the abjective is used to decry the object denoted by the noun. For example.

१ वीरभीतः = ( वीरश्चासौ भीतश्च ) = ( Though ) a brave man in fear

२ धनेशार्थहीनः = ( धनेशश्च असौ अर्थहीनश्च ) ( though ) a master of wealth in poverty

These are the examples for this. In this, the objects denoted by the first is decried by the second.

( ३ ) विशेषणोभयपद-कर्मधारयः ।

In this, both the words are adjectives. For example

१ शीतोष्णं = ( शीतं च तत् उष्णं च ) cold and hot.

२ कृष्णशुक्लः = (कृष्णश्च असौ शुक्लश्च ) Black and white.

( ४ ) उपमानपूर्वपद-कर्मधारयः ।

In this, the thing with which comparison is made, comes first. For example ?

१ शंखपांडुरः = ( शंखवत् पांडुरः ) = white as conchshell ( शंख )

२ घनश्यामः =(घनः इव श्यामः) =grey as the cloud ( घन )

In this, the first word is a thing with which comparison is to be made, and the next denotes the quality.

### ( ५ ) उपमानोत्तरपद-कर्मधारयः ।

In this, the thing to be compared with comes in the second place. For example–

१ पुरुषव्याघ्रः = ( पुरुषः व्याघ्रः इव ) Tiger–like man.
२ नरसिंहः = ( नरः सिंहः इव ) Lion–like man.

In such compounds, the thing to be compared with comes in the second place. Let the students observe the difference between the 4th and the 5th and remember it.

### ( ६ ) संभावनापूर्वपद-कर्मधारयः ।

Examples—

१ गुणबुद्धिः = ( गुण इति बुद्धिः ) = Intellect like qualities
२ पुत्रग्रहणं – ( पुत्र इति ग्रहणं ) = acceptable as son.

### ( ७ ) अवधारणापूर्वपद-कर्मधारयः ।

For examples—

१ विद्याधनं = ( विद्या एव धनं ) = wealth is learning.
२ सुहृद्बन्धुः = ( सुहृत् एव बन्धुः ) = friend is brother.

## Note

By seeing these examples, and the different kinds of compounds, the students might have understood that the compounds are fromed according to the meaning and according to the meaning, the compound is recognised.

Now read the following verses in this lesson.

स्कंद उवाच—

मातरो हि भवत्यो मे भवतीनामहं सुतः ।
उच्यतां यन्मया कार्यं भवतीनामथेप्सितम् ॥ १५ ॥

( महाभारत वन. २३० )

अन्वयः— हि भवत्यः मे मातरः, अहं भवतीनां सुतः । अथ भवतीनां ईप्सितं मया यत् कार्यं उच्यताम् ॥

Meaning... Because, you are my mother, I am your son. Tell me what I have to do according to your desire.

इन्द्रो दधाति भूतानां बलं तेजः प्रजाः सुखम् ॥
तुष्टः प्रयच्छति तथा सर्वान्कामान्सुरेश्वरः ॥ १६ ॥

( महाभारत वन. २२९ )

अन्वयः-- इन्द्रः भूतानां बलं तेजः प्रजाः सुखम् दधाति । तथा सुरेश्वरः तुष्टः सर्वान् कामान् प्रयच्छति ।

Meaning- Indra ( the possessor of unlimited wealth, god ) bears for all the beings in general, strength, brilliance, happiness and progeny; and He, being pleased, will give them whatever they desire.

ब्रह्म क्षत्रेण संसृष्टं क्षत्रं च ब्रह्मणा सह ।
उदीर्णौ दहतः शत्रून्वनानीवाग्निमारुतौ ॥ १० ॥

( महाभारत वन. २६ )

अन्वयः— ब्रह्म क्षत्रेण संसृष्टं क्षत्रं च ब्रह्मणा सह संमिलितं, उदीर्णे शत्रून् दहतः, अग्निमारुतौ वनानि इव ।

meaning— The Bramhanas, united with the Kshatriyas, and the Kshatriyas with the Bramhanas, both will become so brilliant that they will burn all the foes like, the fire and the wind mingling together burn away the forests.

## Note

Here, the word Agni ( fire ) represents the brilliance of the Bramhanas, and the word Vayu ( wind ) represents the strength of the Kshatriayas. In the Vedas, we find that the mantras, which have Agni as their subject matter describe the Bramhanas, and those that have. Vayu as their subject matter describe the Kshatriyas. Let the readers investigate this.

### समास

सुरेश्वरः = ( सुरणां ईश्वरः ) = king of the devas
अग्निमारुतौ = ( अग्निश्च मारुतश्च ) = fire and wind
संसृष्टं = ( सम्यक् सृष्टं ) = united

---

# Lesson – 8

## अव्ययीभाव समास ।

There are two kinds of अव्ययीभाव समास. ( 1 ) नामपूर्वपद अव्ययीभाव the first is called, and ( 2 ) the second, अव्ययपूर्वपद अव्ययीभाव. See the examples—

### ( १ ) नामपूर्वपद अव्ययीभाव– समासः ।

In this compound, the first word is a noun and the second an undeclinable. For example—

१ फलप्रति = ( फलस्य मात्रा ) = fruit–protion
२ शाकप्रति = ( शाकस्य मात्रा )– vegetable–portion

In this compound, the first word is fruit, or vegetable –both nouns. There fore this is called as such.

## ( २ ) अव्ययपूर्वपद-अव्ययीभाव-समासः ।

In this compound the first word is an undeclinable and the second is a noun. Example—

१ उपकुम्भं = ( कुंभस्य समीपे वर्तते इतिं ) = ( is ) near the pot.
२ यथाक्रमं = ( क्रमं अनतिक्रम्य वर्तते इति ) = ( is ) In the proper order.
३ अनुवनं = ( वनस्य समीपं इति ) = ( is ) near the forest.

### Note

This compound is very much used in the Sanskrit Language in every place; and is easily recognisable. If the students give some attention they can recognise it easily. In this lesson practise these verses.

वैशम्पायन उवाच ।

निहते राक्षसे तस्मिन्पुनर्नारायणाश्रमम् ।
अभ्येत्य राजा कौन्तेयो निवासमकरोत्प्रभुः ॥ १ ॥

( महाभारत वन. १५९ )

संस्कृत-टीका— तस्मिन् राक्षसे असुरे निहते निःशेषेण हते पुनः पश्चात् कौन्तेयः कुंतीनंदनः प्रभुः राजा युधिष्ठिरः नारायणाश्रमं नारायणस्य आश्रमं प्रति अभ्येत्य तत्रैव निवासं वास्तव्यं अकरोत् ।

स समानीय तान्सर्वान्भ्रातॄनित्यब्रवीद्वचः ।
द्रौपद्या सहितान्काले संस्मरन्भ्रातरं जयम् ॥ २ ॥

संस्कृत-टीका— स तान् सर्वान् निखिलान् भ्रातॄन् द्रौपद्या सहितान् द्रौपद्या युक्तान् बंधून् समानीय सम्यक् आनीय काले समये भ्रातरं जयं विजयं अर्जुनं संस्मरन् इति वचः अब्रवीत् ।

समाश्चतस्रोऽभिगताः शिवेन चरतां वने ।
कृतोद्देशः स बीभत्सुः पंचमीमभितः समाम् ॥ ३ ॥

**संस्कृत-टीका**— शिवेन सुखेन वने चरतां अस्माकं चतस्रः समाः अभिगताः चत्वारि वर्षाणि व्यतीतानि । सः बीभत्सुः अर्जुनः पंचमीं समां पंचमं संवत्सरं वर्षं अभितः सर्वतः कृतोद्देशः कृतः उद्देशः येन सः । पंचमे वर्षे आगमिष्यामि इति अर्जुनेन उक्तं अस्ति इति आशयः ।

प्राप्य पर्वतराजानं श्वेतं शिखरिणां वरम् ।
पुष्पितैर्द्रुमषण्डैश्च मत्तकोकिलषट्पदैः ॥ ४ ॥
मयूरैश्चातकैश्चापि नित्योत्सवविभूषितम् ।
व्याघ्रैर्वराहैर्महिषैर्गवयैर्हरिणैस्तथा ॥ ५ ॥
श्वापदैर्व्यालरूपैश्च रुरुभिश्च निषेवितम् ।
फुल्लैः सहस्रपत्रैश्च शतपत्रैस्तथोत्पलैः ॥ ६ ॥
तत्रापि च कृतोद्देशः समागमदिदृक्षुभिः ।
कृतश्च समयस्तेन पार्थेनाऽमिततेजसा ॥ ७ ॥
पंचवर्षाणि वत्स्यामि विद्यार्थीति पुरा मयि ।
अत्र गांडीवधन्वानमवाप्तास्त्रमरिंदमम् ॥ ८ ॥
देवलोकादिमं लोकं द्रक्ष्यामः पुनरागतम् ।
इत्युक्त्वा ब्राह्मणान्सर्वानामन्त्रयत पांडवः ॥ ९ ॥

( महाभारत वन. अ. १५८ )

**संस्कृत-टीका**— पुष्पितैः द्रुमषण्डैः द्रुमाणां वृक्षाणां षण्डैः खंडैः मत्त-कोकिलषट्पदैः मत्तैः कोकिलैः षट्पदैः भ्रमरैः मयूरैः चातकैः एतैः पक्षिभिः नित्योत्सवविभूषितं नित्योत्सव इव विभूषितं शोभितं, व्याघ्रैः वराहैः सूकरैः महिषैः गवयैः हरिणैः तथा अन्यैः व्यालरूपैः भयानकैः श्वापदैः पशुभिः रुरुभिः रुरुनामकैः मृगविशेषैः निषेवितं विशेषेण यथा भवति तथा सेवितं, फुल्लैः उत्फुल्लैः सहस्रपत्रैः शतपत्रैः उत्पलैः प्रफुल्लैः कमलैः च तथा एव नीलोत्पलैः नीलकमलैः युक्तं, सुरासुरनिषेवितं सुरैः असुरैः च निषेवितं, पवित्रं शुद्धं, महापुण्यं अतिपुण्यकरं, शिखरिणां शिखरयुक्तानां पर्वतानां वरं श्रेष्ठं, श्वेतं-शुभ्रं, पर्वतराजानं पर्वतानां राजानं हिमाचलं प्राप्य समागमदिदृक्षुभिः

समागमं द्रष्टुं इच्छद्भिः तत्र अपि कृतोद्देशः कृतवासः, अर्जुनस्य समागमं दिदृक्षुभिः अस्माभिः अत्र एव वासः कर्तव्यः । तेन अमिततेजसा अपरिमित-तेजसा पार्थेन पृथापुत्रेण अर्जुनेन पुरा मयि समयः निश्चयः कृतः यत् वद्यार्थी भूत्वा पञ्च वर्षाणि वत्स्यामि इति । अत्र एव देवलोकात् इमं भूलोकं पुनः आगतं अरिन्दमं शत्रुनाशनं अवाप्तास्त्रं प्राप्तास्त्रं गांडीवधन्वानं अर्जुनं द्रक्ष्यामः । इति उक्त्वा पांडवः धर्मराजः सर्वान् ब्राह्मणान् अत्मंत्रयत स्वसमीपं आमन्त्रितवान् ।

### तत्पुरुष-समासाः ।

१ पर्वतराजा = पर्वतानां राजा ।
२ सुरासुरनिषेवितः = सुरासुरैः निषेवितः ।
३ देवलोकाः = देवानां लोकः ।
४ द्रुमषण्डाः = द्रुमाणां षण्डाः ।

### द्विगु-समासः ।

१ पञ्चवर्षाणि = पञ्च च तानि वर्षाणि ।

### द्वंद्व-समासौ ।

१ कोकिलषट्पदाः = कोकिलाश्च षट्पदाश्च ।
२ सुरासुराः = सुराश्च असुराश्च ।

### बहुव्रीहि-समासाः ।

१ कृतोद्देशः = कृतः उद्देशः येन ।
२ अमिततेजाः = अमितं तेजः यस्य ।
३ अवाप्तास्त्रः = अवाप्तानि अस्त्राणि येन ।
४ शतपत्रं = शतानि पत्राणि यस्य ।
५ सहस्रपत्रं = सहस्राणि पत्राणि यस्य ।

### कर्मधारय-समासौ ।

१ मत्तकोकिलषट्पदाः = मत्ताः च ते कोकिलषट्पदाः च ।
२ नीलोत्पलं = नीलं च तत् उत्पलं च ।

# Lesson – 9

## ( १ ) एकशेष समासः ।

There are some compounds in which from among the words ( mentioned in the analysis ) only one word remains. This is called " एकशेष समास. " The examples are as under—

१ हंसौ = ( हंसी च हंसश्च ) = a she swan and a he swan.
२ भ्रातरौ = ( भ्राता च स्वसा च ) = Brother and sister.
३ पुत्रौ = ( पुत्रश्च दुहिता च )= Son and daughter.
४ पितरौ = ( माता च पिता च ) = father and mother.

This sort of uses are many in the Sanskrit language. The students will acquaint themselves with these as they go on studying Sanskrit books. These compounds are vary easy and there is no difficulty of any sort.

## ( २ ) अलुक्समासः ।

The students might have by now, understood that in all the compounds shown up till now, the case-endings of the words found in the analysis have been omitted when compounding them, for instance – सूर्यस्य किरणः; In this analysis, possessive case ending of the word सूर्य i. e. 'स्य' has been omitted and the compound 'सूर्यकिरणः' is formed. In this way every kind of the compound is formed. i. e., for the sake of compounding it is necessary to omit the suffixes in the middle. But now we give such examples of the compounds in which the middle suffixes are not omitted. See the examples—

१ दिविजः = ( दिवि जातः ) = born in the sky.
२ युधिष्ठिरः = ( युधि स्थिरः ) = firm in battle.
३ शरदिजः = ( शरदि जायते ) = born in the autumn season.
४ मातरिश्वः = ( मातरि श्वियते ) = exists in the mother
५ जनुषान्धः = ( जनुषा अन्धः ) = born blind.
६ दूरादागतः = ( दूरात् आगतः ) = come from far.

Though the case-endings in the middle are as they were (after compounding) yet these are called ( समास ) compounds. The students showed remember this peculiarity. Now we show the nature of the secondary derivations ( तद्धित ) as noted below—

### ( ३ ) तद्धितवृत्तिः ।

This in fact, should be called word ending in the derivative suffixes ( तद्धित-प्रत्ययान्त ). Therefore they are not counted along with the important compounds. Secondarily they may be called compounds. Their examples.—

१ गुणवान् = ( गुणः अस्य अस्ति ) = he who has good qualities.
२ धनवान् = ( धनं अस्य अस्ति ) = he who has wealth.
३ धनी = ( धनं यस्य अस्ति ) = he who has wealth.
४ श्रद्धालुः = ( श्रद्धा अस्य अस्ति ) = he who has reliance and reverence.
५ दाशरथिः = ( दशरथस्य अपत्यं पुमान् ) = Dasaratha's male off-spring.

६ आरुणिः = ( अरुणस्य अपत्यं पुमान् ) = Aruna's male off spring.

७ वैनतेयः = ( विनतायाः अपत्यं पुमान् ) = Vinatha's male off spring.

८ पटुतरः = ( अतिशयेन पटुः ) = Very adept.

९ यशस्वी = ( यशः अस्य अस्ति ) = he who is famous.

१० तुंदिलः = ( प्रशस्तं तुन्दं अस्य अस्ति ) = Big-bellied.

११ पटुता = ( पटोः भावः पटुता ) = Expertness.

१२ शैत्यं = ( शीतस्य भावः ) = coldness.

१३ मार्दवं = ( मृदोः भावः ) = softness.

१४ कौशलं = ( कुशलस्य भावः ) = Cleverness.

१५ नैपुण्यं = ( निपुणस्य भावः ) = Expertness.

In this way auxiliary worded derivatives ( उपपद ) are also used much.

( ४ ) उपपद-वृत्तिः ।

In this a form of the verb peculiarly adheres with the original word, as for example--

१ धनदः – ( धनं ददाति ) – giver of wealth.

२ जन्मदः – ( जन्म ददाति ) – giver of birth.

३ भूपः – ( भुवं पाति ) – Protector of the earth.

४ भूपालः – ( भुवं पालयति ) – protector of the earth.

५ कुंभकारः – ( कुंभं करोति ) – maker of pots ( potter )

६ शस्त्रकृत् – ( शस्त्रं करोति ) – maker of weapons.

७ वेदाध्यायी – ( वेदं अधीते ) – one who studies the vedas

८ भूभृत् – ( भुवं बिभर्ति ) – supporter or profector of the earth.

These auxiliary-worded-derivations ( उपपद ) are used by thousands in Sanskrit language. Therefore their study is necessary.

## ( ५ ) कृद्वृत्तिः

Just as the secondary derivations (तद्धित) shown formerly, so also gerunds and participles (कृद्वृत्ति) are endless in Sanskrit. Their examples are as under—

| | | | |
|---|---|---|---|
| १ | कर्ता | = ( करोति इति ) | = Doer |
| २ | भर्ता | = ( बिभर्तीति ) | = protector |
| ३ | हर्ता | = ( हरतीति ) | = Destroyer ( or one who takes away ) |
| ४ | गच्छन् | = ( गच्छतीति ) | = Goer |
| ५ | कुर्वन् | = ( करोतीति ) | = Doer |
| ६ | पश्यन् | = ( पश्यतीति ) | = Seer |
| ७ | भोक्तव्यः | = ( भोक्तुं योग्यः ) | = fit to be eaten |
| ८ | कर्तव्यः | = ( कर्तुं योग्यः ) | = fit to be done |
| ९ | दातव्यः | = ( दातुं योग्यः ) | = fit to be given |
| १० | जिगमिषा | = ( गन्तुं इच्छा ) | = wish to go |
| ११ | विवक्षा | = ( वक्तुं इच्छा ) | = wish to say |
| १२ | पिपासा | = ( पातुं इच्छा ) | = wish to drink |
| १३ | बुभुक्षा | = ( भोक्तुं इच्छा ) | = wish to enjoy |
| १४ | अलंकारिष्णुः | = ( अलंकर्तुं इच्छुः ) | = wish to decorate one's self |
| १५ | देयम् | = ( दातुं योग्यं ) | = fit to be given |
| १६ | लेख्यम् | = ( लिखितुं योग्यं ) | – fit to be written |
| १७ | गतवान् | = ( अगमत् इति ) | = he who has gone |
| १८ | भृत्यः | = ( भर्तुं योग्यः ) | = fit to be protected |
| १९ | स्तुत्यः | = ( स्तोतुं योग्यः ) | = fit to be praised |
| २० | सुकरः | = ( सुखेन कर्तुं योग्यः ) | = fit to be done easily. |
| २१ | दुर्लभः | = ( दुःखेन लब्धुं योग्यः ) | = To be got with diffiiculty |

२२ दुर्दानं = ( दुःखेन दातुं योग्यः ) = To be given with difficulty

२३ ग्राही = ( गृह्णातीति ग्राही ) = a receiver
२४ तितीर्षुः = ( तर्तुं इच्छुः ) = one who wishes to cross
२५ चिकीर्षुः = ( कर्तुं इच्छुः ) = one who wishes to do

Let the students understand the forms this way.

## Sentences with Compounds

( १ ) रामस्तां रात्रीं भरद्वाजाश्रमे सुखमवसत् । सुखमवसद्भरद्वाजाश्रमे तां रात्रीं रामः । रामो भरद्वाजाश्रमेऽवसत्तां रात्रीं सुखम् ।

( २ ) प्रातरुत्थाय महर्षिमभिवाद्य तावग्रे जग्मतुः । अग्रे जग्मतुस्तावभिवाद्य महर्षिं प्रातरुत्थाय । उत्थाय प्रातरभिवाद्य महर्षिमग्रे तौ जग्मतुः ।

( ३ ) लक्ष्मणः सीतयाः सुखमासनं चकार । चकार सुखमासनं सीतयाः लक्ष्मणः ।

---

# Lesson – 10

### वैशम्पायन उवाच—

ततो रजन्यां व्युष्टायां धर्मराजं युधिष्ठिरम् ।
भ्रातृभिः सहितः सर्वैरवंदत धनंजयः ॥ १ ॥

( महाभारत वन. अ. १६६ )

**संस्कृत-टीका—** ततः तत्पश्चात् रजन्यां व्युष्टायाम् रात्र्यां गतायां, सर्वैः निखिलैः भ्रातृभिः बंधुभिः सहितः धनंजयः विजयः अर्जुनः युधिष्ठिरं धर्मराजं अवंदत वंदनं कृतवान् ।

एतस्मिन्नेव काले तु सर्ववादित्रनिःस्वनः ।
बभूव तुमुलः शब्दस्त्वंतरिक्षे दिवौकसाम् ॥ २ ॥

संस्कृत टीका— एतस्मिन् एव काले अस्मिन् एव समये तु अन्तरिक्षे दिवौकसां देवतानाँ सर्ववादित्रनि:स्वन: सर्वेषां वादित्राणां शब्द: तुमुल: महान् बभूव अभवत् ।

रथनेमिस्वनश्चैव घण्टाशब्दश्च भारत ।
पृथग्व्यालमृगाणां च पक्षिणामिव सर्वशः ॥ ३ ॥

संस्कृत-टीका — हे भारत ! रथनेमिस्वन: रथस्य नाभिशब्द: चैव तथाऽत्र घंटाशब्द: च घंटानां शब्द: च व्यालमृगाणां व्याघ्रमृगादीनाँ च शब्द: पक्षिणां इव सर्वश: बभूव ।

Now study the following verses—

महाभारत भीष्मपर्व । ( अ. १ )

वैशम्पायन उवाच—

यथा युयुधिरे वीराः कुरुपांडवसोमकाः ।
कुरुक्षेत्रे तपःक्षेत्रे शृणु त्वं पृथिवीपते ॥ २ ॥

अन्वयः — कुरुपांडवसोमका: वीरा: तप:क्षेत्रे कुरुक्षेत्रे यथा युयुधिरे, हे पृथ्वीपते ! त्वं शृणु ॥

Meaning– O hear, king, how the Kauravas, Pandavas, and Somaks fought at Kurukshetra, the ground of penance.

तेऽवतीर्य कुरुक्षेत्रं पांडवाः सहसोमकाः ।
कौरवाः समवर्तन्त जिगीषन्तो महाबलाः ॥ ३ ॥

अन्वयः— ते सहसोमका: पाँडवा: कुरुक्षेत्रं अवतीर्य महाबला: जिगीषन्त: कौरवा: समवर्तन्त ॥

Meaning— The Pandavas with the Somaka-warriors, having got into ( the battle-field ) of Kurukshetra, began to fight with the powerful Kauravas and wanted to win each other.

वेदाध्यायनसंपन्नाः सर्वे युद्धविशारदाः ।
आशंसन्तो जयं युद्धे बलेनाभिमुखा रणे ॥ ४ ॥

अन्वयः— सर्वे वेदाध्ययनसंपन्नाः युद्धविशारदाः बलेन रणे अभिमुखाः युद्धे जयं आशंसन्तः ॥

Meaning— All the warriors well-versed in the Vedas, experts in fight, came forward with strength and each wanted to win the war.

अभीयाय च दुर्धर्षा धार्तराष्ट्रस्य वाहिनीम् ।
प्राङ्मुखाः पश्चिमे भागे न्यविशन्त ससैनिकाः ॥ ५ ॥

अन्वयः— धार्तराष्ट्रस्य वाहिनीं अभीयाय दुर्धर्षाः ससैनिकाः प्राङ्मुखाः पश्चिमे भागे न्यविशन्त ॥

Meaning— Having gone in front of the army of the sons of Dhritarashtra, the undefeatable warriors stood on the western side, facing eastwards.

समन्तपञ्चकाद् बाह्यं शिविराणि सहस्रशः ।
कारयामास विधिवत्कुंतीपुत्रो युधिष्ठिरः ॥ ६ ॥

अन्वयः— कुंतीपुत्रः युधिष्ठिरः समन्तपंचकात् बाह्यं सहस्रशः शिबिराणि विधिवत् कारयामास ॥

Meaning— Yudhishtira, son of Kunti, got thousands of tents fixed up as per rules beyond the place known as Samantapanchak.

शून्या च पृथिवी सर्वा बालवृद्धावशेषिता ।
निरश्वपुरुषेवासीद्रथकुंजरवर्जिता ॥ ७ ॥

अन्वयः— सर्वा पृथिवी बालवृद्धावशेषिता, निरश्वपुरुषा, रथकुंजर-वर्जिता शून्या इव आसीत् ॥

Meaning— All this place, was such that there were only children and old men left that it was bereft of

young men and horses, and of chariots and elephants. ( i. e. All of them having come to the battle-field there were none in the places. )

यावत्तपति सूर्यो हि जम्बूद्वीपस्य मंडलम् ।
तावदेव समायातं बलं पार्थिवसत्तम ।

अन्वयः— हे पार्थिवसत्तम ! सूर्यः जम्बूद्वीपस्य मंडलं यावत् तपति तावद् एव बलं समायातम् ॥

Meaning— O the best of kings ! The army that had come there was as much as that part of Jamboodweeepa over which the sun shines.

एकस्थाः सर्ववर्णास्ते मण्डलं बहुयोजनम् ।
पर्याक्रामन्त देशांश्च नदीः शैलान्वनानि च ॥ ९ ॥

अन्वयः— ते सर्ववर्णाः एकस्थाः बहुयोजनं मंडलं देशान्, नदीः, शैलान् वनानि च पर्याक्रामन्त ॥

Meaning— People of all classes ( or colours ) gathered in one place, and were spread over, many miles of the ground, the country, the rivers, and the mountains, and the forests.

तेषां युधिष्ठिरो राजा सर्वेषां पुरुषर्षभ ।
व्यादिदेश सबाह्यानां भक्ष्यभोज्यमनुत्तमम् ॥ १० ॥

अन्वयः— हे पुरुषर्षभ ! तेषां सबाह्यानां सर्वेषां अनुत्तमं भक्ष्यभोज्यं युधिष्ठिरो राजा व्यादिदेश ॥

Meaning— O the best of men ! Yudhishtira there ordered that good food and drinks should be given for all those warriors along with the outsiders.

शय्याश्च विविधास्तात तेषां रात्रौ युधिष्ठिरः ।
एवं वेदो वेदितव्यः पाण्डवेयोऽयमित्युत ॥ ११ ॥

अन्वयः— हे तात ! युधिष्ठिरः रात्रौ तेषां विविधाः शय्याः च । अयं पाण्डवेयः इति उत एवं वेदो वेदितव्यः ॥

Meaning— O Sir ! Yudhishtira caused many kinds of beds for them at night, ( so that ) people who wanted to know, may know that these belong to the side of Pandavas.

अभिज्ञानानि सर्वेषां संज्ञाश्चाभरणानि च ।
योजयामास कौरव्यो युद्धकाल उपस्थिते ॥ १२ ॥

अन्वयः— सर्वेषां संज्ञा: अभिज्ञानानि, आभरणानि च उपस्थिते युद्धकाले कौरव्य: योजयामास ॥

Meaning— Signs for all, special names, ornaments for signs, all these came during the time of the war, by the arrangements of Dharmraja.

दृष्ट्वा ध्वजाग्रं पार्थस्य धार्तराष्ट्रो महामनाः ।
सह सर्वैर्महीपालैः प्रत्यव्यूहत पाण्डवम् ॥ १३ ॥

अन्वयः— पार्थस्य ध्वजाग्रं महामना: धार्तराष्ट्र: दृष्ट्वा सर्वै: महीपालैः सह पांडवं प्रत्युव्यूहत ॥

Meaning— The proud son of Dhritarashtra, ( Duryodhana ) having seen the flag of Arjuna, constructed a phalanx of his army against the Pandavas.

## संस्कृत–वाचन–पाठः ।

### चित्रकूटे भरतागमनम् ।

तत् श्रुत्वा रामः विहसन् लक्ष्मणं आह, न अहं भरतं तथा मन्ये, यथा त्वं स्वचेतसि कल्पयसि । नूनं सः प्रजाजनैः अनुगम्यमानः दर्शनेच्छया एव समायातो भविष्यति । एवं वदत एव

---

## Translation

### Bharata's coming to Chitrakoota

Hearing this, Rama laughed and said to Lakshamana- ' I do not think that Bharata is such as you think. In fact he is coming followed by all the people with the

रामस्य भरतः अश्रुपूर्णेक्षणः पादौ जग्राह, न च शशाक वक्तुम्। रामः तु अनुजं सादरं उत्थाप्य आलिलिङ्ग, अपृच्छच्च कुशलं तातस्य। सकलं अपि वृत्तान्तं भरतात् निशम्य रामः मुहूर्तं विललाप। ततः रामः वारंवारं कृताग्रहोऽपि पितुः आज्ञाभङ्गकातरः न मेने प्रत्यावर्तनाय। भरतं च प्राह– 'हे भरत! त्वं मदीये पादुके गृहीत्वा व्रज। निखिलविशङ्काः परित्यज्य जनौघैः च पूज्यमानः भूत्वा अस्मन्मतेन सकलभुवनराज्यं कारय।'

---

desire of seeing ( us ) only." While Rama was saying so, Bharat, with eyes full of tears ( came and ) grasped Rama's feet and was not able to speak. Rama, then, lifting up his brother with love; embraced and asked the welfare of his father. Having heard all that had happend from Bharat Rama wept for a while. Then Rama, though pressed again again,' did not consent to get dack ( to Ayodhya ) for fear of disobeying the father's commands, and said to Bharata, " O Bharata, take my sandalsi and go; with my consent reign over all the earth giving up all doubts and being revered by all the people at large.

# Lesson – 11

## संस्कृत–वाचन–पाठः ।

### वैदेहीहरणम् ।

हे वरानने ! यत्र काकुत्स्थः तत्र गच्छामि । ते स्वस्ति अस्तु । त्वां समग्राः वनदेवताः रक्षन्तु । घोराणि निमित्तानि प्रादुर्भवन्ति । इत्येवं अभिधाय सीतया परुषं उक्तः कुपितः राघवानुजः न चिरात् एव रामं प्रति प्रतस्थे । तदा अवसरं आसाद्य अन्तरं आस्थितः परिव्राजकरूपधृक् श्लक्ष्णकाषायसंवीतः शिखी, छत्री, उपानही वामे अंसे शुभे यष्टिकमण्डलू अवसज्य दशग्रीवः सूर्य-चन्द्राभ्यां रहितां संध्यां इव महत्तमः क्षिप्रं वैदेहीं अभिचक्राम । तं उग्रं पापकर्माणं संदृश्य जनस्थानगताः द्रुमाः न प्रकम्पन्ते स्म, न च मारुतः प्रवाति स्म । शीघ्रस्रोता अपि गोदावरी नदी रक्त-लोचनं तं दृष्ट्वा भयात् स्तिमितं गन्तुं आरेभे । तृणैः आवृतः कूपः

---

## Translation

" O, lady of a beautiful face, I shall go where Rama is; let there be good to you; let all the forest-gods protect you; signs of fearful happenings are coming out. " Having said thus, the angry brother of Rama ( Lakshmana ) who had been told cutting words by Sita, started towards Rama without delay. Then, seeing this opportanity, Ravana ( Dashagriva ) who was hiding ( all this while ), came quickly before Sita in the form of a Sanyasi ( a mendicant ), dressed in a bright ruddle- coloured-robe, with a tuft of hair, an umbrella, sandles on the feet, a good stick in the left hand and a bowel, like the dark evening bereft of the sun and

इव सहसा वैदेहीं दृष्ट्वा स भव्यरूपेण अतिष्ठत् । तदा जिहीर्षुणा रावणेन 'राक्षसानां अयं वासः कथं त्वं इह आगता' इति एवं वैदेही पृष्टा ।

तदा आत्मानं परिव्राजकं शंसन्तं रावणं जानकी उवाच- 'आगमिष्यति मे भर्ता वन्यं पुष्पफलादिकं पुष्कलं आदाय अधुना एव । त्वं च नाम च गोत्रं च कुलं च आत्मनः आचक्ष्व तत्त्वतः । किमर्थं एकः एव दण्डकारण्ये चरसि ?' एवं ब्रुवत्यां सीतायां राक्षसाधिपः रावणः तीव्रं उत्तरं प्रत्युवाच । 'हे सीते, येन सदेवासुरमानुषाः लोकाः वित्रासिताः, सः अहं रावणः रक्षोगणेश्वरः अस्मि । समुद्रस्य मध्ये लङ्का नाम मम महापुरी, या सागरेण परिक्षिप्ता, गिरिमूर्धनि निविष्टा अस्ति । तत्र सीते, मया सार्धं वनेषु विचरिष्यसि ।' एवं रावणेन उक्ता कुपिता जनकात्मजा राक्षसं तं अनादृत्य प्रत्युवाच । 'त्वं जम्बुकः दुर्लभां मां सिंही

---

the moon; seeing thiss sinful and fearful man, (even) the trees of the Janasthana dip not shake. The wind did not blow. The Godavari river too, which was fast flowing seeing the blood-red eyed man, began to flow slowly on account of fear.

Seeing Vaidehi, he stood putting up a charming appearance, like a well covered with grass. Then, Vaidehi was asked by Ravana who wished to kidnap her. "This is the abode of Rakshasas, how did you come here?"

Then Janaki said to Ravana, who was praising himself as a Sanyasi, "My husband is coming now only bringing with him forest-fruits and flowers abundantly. Give out truly your name, preceptor's name (गोत्र), family name (कुल). Why are you roaming along in the

इच्छसि ? आदित्यस्य प्रभा इव न अहं त्वया स्प्रष्टुं शक्या। क्षुधितस्य सिंहस्य आशीविषस्य च वदनात् दंष्ट्रान् आदातुं इच्छसि ? कालकूटं विषं पीत्वा स्वस्तिमान् जीवितुं इच्छसि ? शिलां कण्ठे अवसृज्य समुद्रं तर्तुं इच्छसि ? सूर्यचन्द्रमसौ उभौ पाणिभ्यां हर्तुं इच्छसि ? ' प्रतापवान् दशग्रीवः सीतायाः वचनं निशम्य सुमहद्वपुः चकार। पुनः च वाक्यकोविदः सः मैथिलीं वाक्यं बभाषे। ' अम्बरे स्थितः अहं मेदिनीं भुजाभ्यां उद्वहेयम्। समुद्रं आपिबेयम्। रणे स्थितः मृत्युं हन्याम्। तीक्ष्णैः शरैः अर्कं तुद्याम्। महीतलं अपि बिभिन्द्याम्। ' एवं उक्तवतः तस्य क्रुद्धस्य रावणस्य नेत्रे रक्ते बभूवतुः। ततः सद्यः सौम्यं रूपं परित्यज्य स रावणः कालरूपाभं स्वं तीक्ष्णं रूपं भेजे। क्रोधेन संरक्तनयनः काममोहितः सुदुष्टात्मा राक्षसः सीतां अभिगम्य बुधः खे रोहिणीं इव जग्राह।

---

Dandakaranya ? " Ravana then said with sharp words to Sita who was saying thus, " O Sita, I am that Ravana, the king of the gang the Rakshasas, who shook all the worlds with the Devas, Asuras and men. There is my big city called Lanka in the middle of the Ocean, and this is situated at the top of the hill and surrounded by the sea. There, O Sita you will roam with me in the forest. " Being told thus, the angry daughter of Janaka, ( Sita ) replied him without any regard for him.

You are a jackal, and you want to have me, a lioness ? I, like the brilliance of the sun cannot be touched by you. Do you want to pull out the tooth from the mouth of a lion and a serpent ? Do you want to live in healthy manner, having drunk a deathly

poison ? Do you want to cross the sea, with a stone bound to your neck ? Do you want to hold the sun and the moon with your hand ?" The powerful Ravana, hearing the words of Sita, made his body big and powerful. Again that adept in speaking, said to Maithily ( Sita ). ' Being in the sky, I can carry the whole earth in my hands. I can drink ( the waters of ) the sea. I can kill the death in battle. I can pierce the sun with sharp arrows; and split the very earth itself." Both the eyes Ravana who was saying so then became red. Then immediately giving up the gentle form, Ravana came to his own form, fearful as death. Then the sinful Rakshasa, with red eyes on account of anger, blinded with lust, came near Sita and caught hold of her like Budha ( बुध ) catching Rohini in the sky.

# Lesson – 12

पांडुरेणातपत्रेण ध्रियमाणेन मूर्धनि ।
मध्ये नागसहस्रस्य भ्रातृभिः परिवारितः ॥ १४ ॥

अन्वयः— मूर्धनि ध्रियमाणेन पांडुरेण आतपत्रेण नागसहस्रस्य मध्ये भ्रातृभिः परिवारितः ।

Meaning— With white umbrellas over the head, in the middle of thousands of elephants, and surrounded by the relatives,

दृष्ट्वा दुर्योधनं हृष्टाः पाञ्चालाः युद्धनंदिनः ।
दध्मुः प्रीता महाशंखान्भेर्यश्च मधुरस्वनाः ॥ १५ ॥

अन्वयः – दुर्योधनं दृष्ट्वा युद्धनंदिनः पांचालाः हृष्टाः प्रीताः मधुरस्वनाः भेर्यः महाशंखान् च दध्मुः ॥

Meaning— Seeing Duryodhana ( as above ) the warriors of Panchala, being pleased and satisfied with the war, beat their drums that made sweet noise, and blew their conches.

ततः प्रहृष्टां तां सेनामभिवीक्ष्याऽथ पांडवाः ।
बभूवुर्हृष्टमनसो वासुदेवश्च वीर्यवान् ॥ १६ ॥

अन्वयः— अथ ततः तां प्रहृष्टां सेनां अभिवीक्ष्य पांडवाः हृष्टमनसः बभूवुः वीर्यवान् वासुदेवः च ॥

Meaning-- Then seeing the joyful army, the Pandavas became satisfied and the valourous Krishna also was satisfied.

ततो हर्षं समागम्य वासुदेवधनंजयौ ।
दध्मतुः पुरुषव्याघ्रौ दिव्यौ शंखौ रथे स्थितौ ॥ १७ ॥

अन्वयः-- ततः हर्षं समागम्य पुरुषव्याघ्रौ रथे स्थितौ वासुदेवधनंजयौ दिव्यौ शंखौ दध्मतुः ॥

Meaning— Then, Krishna, the best of men, and Arjuna also being pleased, sat in the chariot and began to blow their conches.

पांचजन्यस्य निर्घोषं देवदत्तस्य चोभयोः ।
श्रुत्वा तु निनदं योधाः शकृन्मूत्रं प्रसुस्रुवुः ॥ १८ ॥

अन्वयः— पांचजन्यस्य निर्घोषं देवदत्तस्य च उभयोः निनदं श्रुत्वा योधाः शकृत्मूत्रं प्रसुस्रुवुः ॥

Meaning— Then hearing the noise of panchajanya ( the conch of Krishna ) and that of Devadatta ( couch of Arjuna ) the stools and urine of the warriors ( on the enemy's side ) volunterly came out.

यथा सिंहस्य नदतः स्वनं श्रुत्वेतरे मृगाः ।
त्रसेयुर्निनदं श्रुत्वा तथाऽऽसीदत तद् बलम् ॥ १९ ॥

अन्वयः— यथा नदतः सिंहस्य स्वनं श्रुत्वा इतरे मृगाः त्रसेयुः तथा निनदं श्रुत्वा तत् बलं असीदत ।

Meaning— Just as the deer run about here and there with fear, hearing the roar of the lion, so also ( enemy's ) army became weak by hearing the noise ( of the conches. )

उदतिष्ठद्रजो भौमं न प्राज्ञायत किंचन ।
अस्तंगत इवाऽऽदित्ये सैन्येन सहसाऽऽवृते ॥ २० ॥

अन्वयः— सैन्येन सहसा आवृते भौमं रजः उदतिष्ठत् । अस्तंगत इव आदित्ये किंचन न प्राज्ञायत ॥

Meaning— Owing to the army coming out suddenly, dust came out of the ground and nothing was to be seen as if the sun had set.

ववर्ष तत्र पर्जन्यो मांसशोणितवृष्टिमान् ।
दिक्षु सर्वाणि सैन्यानि तदद्भुतमिवाऽभवत् ॥ २१ ॥

अन्वयः— दिक्षु सर्वाणि सैन्यानि मांसशोणितवृष्टिमान् पर्जन्यः तत्र ववर्ष । तत् अद्भुतं इव अभवत् ॥

Meaning— The armies on all sides showered, as if there was the rain of flesh and blood. The sight was monstrous.

वायुस्तत्र प्रादुरभून्नीचैः शार्करकर्षणः ।
विनिघ्नंस्तान्यनीकानि शतशोऽथ सहस्रशः ॥ २२ ॥

अन्वयः-- तानि अनीकानि शतशः अथ सहस्रशः विनिघ्नन् तत्र नीचैः शार्करकर्षणः वायुः प्रादुः अभूत् ॥

Meaning-- A wind arose in the army that killed thousands of warriors; and that brought out the sand from below.

उभे सैन्ये च राजेन्द्र युद्धाय मुदिते भृशम् ।
कुरुक्षेत्रे स्थिते यत्ते सागरक्षुभितोपमे ॥ २३ ॥

अन्वयः— हे राजेन्द्र ! उभे सैन्ये युद्धाय मुदिते भृशं कुरुक्षेत्रे स्थिते सागरक्षुभितोपमे यत्ते ॥

Meaning--- O the best of the kings ! The armies on both sides rejoiced on account of the war. At that time those that congregated at Kurukshetra, became enraged as a sea, and became ready also.

तयोस्तु सेनयोरासीदद्भुतः स तु संगमः ।
युगान्ते समनुप्राप्ते द्वयोः सागरयोरिव ॥ २४ ॥

अन्वयः— तयोः सेनयोः तु स संगमः तु अद्भुतः आसीत् । युगान्ते समनुप्राप्ते द्वयोः सागरयोः इव ॥

Meaning— The clash of the armies was wonderful. It looked as if the end of the period of time ( युग ) had come or as if two big seas were coming in clash with each other.

ततस्ते समयं चक्रुः कुरुपांडवसोमकाः ।
धर्मान्संस्थापयामासुर्युद्धानां भरतर्षभ ॥ २५ ॥

अन्वयः-- ततः ते कुरुपांडवसोमकाः समयं चक्रुः । हे भरतर्षभ ! युद्धानां धर्मान्संस्थापयामासुः ॥

Meaning— Then the Kauravas, the Panavas and the Somaks began to make rules for the war.

वाचा युद्धप्रवृत्तानां वाचैव प्रतियोधनम् ।
निष्क्रान्ता पृतनामध्यान्न हन्तव्याः कदाचन ॥ २८ ॥

अन्वयः— वाचा युद्धप्रवृत्तानां वाचा एव प्रतियोधनम् । पृतनामध्यात् निष्क्रान्ताः कदाचन न हन्तव्याः ॥

Meaning— Those who fight by noises must be fought with by noises; those who run away from the the army, should not be killed.

रथी च रथिना योध्यो गजेन गजधूर्गतः ।
अश्वेनाश्वी पदातिश्च पादातेनैव भारत ॥ २९ ॥

अन्वयः— हे भारत ! रथी रथिना, गजधूर्गतः गजेन, अश्वी अश्वेन, पदातिः पादातेन एव योध्यः ।

Meaning— The warrior in a chariot should fight with a warrior in a chariot; the warrior on an elephant should fight with the warrior on an elephant; the warrior on the back of a horse should fight with a warrior on horseback; a foot-soldier should fight with a foot-soldier.

यथायोगं यथाकामं यथोत्साहं यथाबलम् ।
समाभाष्य प्रहर्तव्यं न विश्वस्ते न विह्वले ॥ ३० ॥

अन्वयः— यथायोगं यथाकामं यथोत्साहं यथाबलं, समाभाष्य प्रहर्तव्यं, विश्वस्ते न, विह्वले न प्रहर्तव्यम् ॥

Meaning— As is the capability, desire, enthusiasm, and strength, so they should speak out and fight. The warrior who trusts, or the one who is frightened should not be killed.

## संस्कृत–वाक्यानि ।

रामे दूरं गते वने सा दुःखार्ता रावणेन गृहीता राम रामेति अतिचुक्रोश । ततः सा आतुरा भ्रान्तचित्ता मत्ता इव राक्षसेन्द्रेण विहायसा ह्रियमाणा 'हा लक्ष्मण, महाबाहो, गुरुचित्त-प्रसादक ! रक्षसा ह्रियमाणां न जानीषे ?' इत्येवं भृशं चुक्रोश । हे राघव, जीवितं सुखं अर्थं च धर्महेतोः परित्यजन् अधर्मेण ह्रियमाणां मां किं न पश्यसि ? हे परन्तप ! नुन त्वं अविनीतानां विनेतासि, तस्मात् एवं विधं पापं रावणं शाधि । हन्त ! इदानीं बान्धवैः सह कैकेयी सकामा संजाता । इत्येवं सकरुणं विलपन्तीं सुदुःखितां सीतां दुष्टात्मा स राक्षसेन्द्रः हठात् रथं आरोप्य लङ्कां स्वराजधानीं आकाशमार्गेण प्रययौ ।

---

## Translation

Rama, having gone far off in the jungle, she having been caught by Ravana, began to cry out, "O Rama," "O Rama." She in agong, and fright being carried away in the air by the king of the Rakshasas, cried in many ways thus— "O very powerful man Lakshmana, you, who could please the minds of the elders, do you not know that I am being carried away by a Rakshasa ? O Rama, you, who has given up your happy living and wealth for the sake of your duty, do you not see that I am being sinfully carried away ?'

'O the killer of foes, you are surely such a one as to curb down the disobedient; so punish such a sinner as Ravana ! Alas.' Now Kaikeyee has now fulfilled her desire

along with her relatives." Putting obstinately Sita, who was thus piteously crying and who was in agong, into the aeroplane the sinful king of the Rakshasas went to Lanka his capital by air.

शब्दाः ।

पलित = White hair on account of old age
कर्णाभरणं = Ear-Ornament.
प्रतिध्वनिः = Echo
उद्दामदर्प = Pride.
विवरं = A hole
अवधीरयन्तः = Disregarding, regardless, decrying
राजप्रकृतिः = The nature of a king.
अलीक = Untruth
मोहनशक्तिः = Such strengh which creates one senseless
नैष्ठुर्य = Hardness

---

# Lesson – 13

## संस्कृत-वाचन-पाठः ।

### शुकनासस्य उपदेशः ।

तात चन्द्रपीड ! त्वया विदितं वेदितव्यं, अधीतानि सर्व-शास्त्राणि, अतः ते न अल्पं अपि उपदेष्टव्यं अस्ति । तथापि निसर्गतः एव भानुना अभेद्यं, रत्नालोकैः अच्छेद्यं, प्रदीपप्रभया

---

### Translation

Dear Chandrapida, you have known all that is to be known, you have studied all. The sacred books, therefore there is nothing to be told to you; yet ( I

अनपनेयं, यौवनप्रभवं अतिगहनं तमः भवति। दारुणः अयं लक्ष्मीमदः विवेकिनं अपि पुरुषं अविवेकी करोति। ऐश्वर्यतिमिरं चक्षुष्मन्तं अपि गताक्षत्वं विदधाति। दर्पदाहज्वरस्य ऊष्मा पटीर-प्रभृतिभिः शिशिरैः अपि उपचारैः न उपशाम्यति। विषयविषस्य सततं आस्वादेन उत्पन्नः विषमः मोहः मणिमन्त्रौषधादिभिः विषोच्चारणसाधनैः अपि अगम्यः भवति। नित्यं स्नानशौच-संध्यावन्दनादिभिः रागमलस्य अवलेपः अपनेतुं शक्यते। अजस्रं घोरा राज्यसुखसंनिपातनिद्रा क्षपावसाने अपि अप्रबोधा भवति। गर्भैश्वरत्वं, अभिनवयौवनत्वं, अप्रतिमरूपत्वं, अमानुषशक्तित्वं

---

want to say that ) naturally, the darkness born of youthfulness is so deep. that it cannot be split by the sun, it cannot be cut by the lustre of diamonds, it cannot be driven away by the brightness of lamps. The pride of wealth is fearful. It makes the wise man unwise. The darkness of wealth makes even that man blind who has got eyes. The heat of the fever of pride cannot be cooled down even by such cooling things like sandalwood. The terrible senselessness brought out by the constant tasting. of the poison of sensual things, cannot be cured even by any of the poison-removing means, such as pearls that attract poison (मणि), hypnotism and medicines. It is possible to remove the dirt of desires that has struck up ( on the mind ) by such things as meditation of the Supreme Being, cleanliness ( of all the senses ) and Bathing. The sleep that has arisen out of the typhoid of the enjoyment of kingly happiness, docs not end even if the night ends. Such things as Riches since birth, now youthfulness,

च इति इयं महती खलु अनर्थपरंपरा सर्वा। एषां एकं एकं अपि अविनयानां आयतनं अनर्थाय, किमुत समवायः? तथा च उक्तं अस्ति—

यौवनं धनसम्पत्तिः प्रभुत्वं अविवेकता।
एकैकमप्यनर्थाय किं पुनस्तच्चतुष्टयम्॥

यौवनारम्भे च प्रायः शास्त्रजलप्रक्षालनेन निर्मला अपि कालुष्यं उपयाति मतिः। अनुज्झितधवलता अपि सरागा एव भवति यूनां दृष्टिः। अपहरति च वात्या इव शुष्कं पत्रं आत्मेच्छया प्रकृतिः पुरुषं यौवनसमये। स्वसाम्राज्ये इन्द्रियहरिणानां हारिणी इयं विषयमृगतृष्णिका सततं दुरन्ता भवति। नवयौवने सलिलानि

---

beauty beyond comparison, super human strength, all bring on a family of dangers. Any one of the above things is enough to create a dangerous house of sin; but where all these found together what is to be said of it ? It is therefore said—

" Youthfulness, Riches, power and foolishness, each one of these is enough to create dangers; but if all these are found in one place what can be said about it ? "

At the beginning of youthfulness mostly even the intellect that has been washed pure by the water of the sacred litrature study, will become impure again. The view of the youths becomes tainted with desires, though it has become pure white by giving up things. As a dry leaf is carried away by a whirl wind, so also, the material things carry away the man to their kingdom. The mirage of sensual things which carries away the deer of senses in to its kingdom ends badly. In the new

इव विषयस्वरूपाणि आस्वाद्यमानानि मनसः मधुरतराणि आपतन्ति। दिङ्मोह इव उन्मार्गप्रवर्तकः विषयेषु अत्यासङ्गः पुरुषं नाशयति। भवादृशा एव भवन्ति भाजनानि उपदेशानाम्। अपगतमले हि मनसि स्फटिकमणौ रजनिकरस्य करनिकराणि इव सुखेन विशन्ति उपदेशाः। अमलं अपि गुरुवचनं स्वच्छसलिलं इव अभव्यस्य श्रवणस्थितं महत् शूलं उपजनयति। इतरस्य तु मलिनं अन्धकारं प्रदोषसमयनिशाकर इव गुरुपदेशः सकलं अपि दोषजातं अपहरति। अयमेव च अनास्वादितविषयरसस्य ते उपदेशकालः। दुष्प्रकृतेः श्रुतं शास्त्रं अपि अविनयस्य एव कारणं भवति। चन्दनप्रभवः न दहति किं अनलः ?

---

youthfulness the sensual forms enjoyed, become sweet like water, for the mind. The sensual company beyond measure, that is like a mad man who has lost the sense of cardinal points, destroys the man. People like you are the proper subjects for precepts, " When the mind is cleansed off the dirt, precepts get in to it as the moon's rays pieree the pure white jewel easily. Though the precepts are pure, when they fall in to the ear of the unfit, they pain him like water, though pure, that gets into the ear. For the others. ( i.e. those that are fit ) the precepts of the guru, remove all bad qualities as the moon that removes the darkness of the night. This is the proper time for precepts to you who have not tasted yet the juice of sensual things. Even if a bad man hears the precepts it will only be a cause for disobedience. Though the fire comes out of sandal wood, does it not burn ?

## शब्दाः ।

| | |
|---|---|
| वात्या | = A whirl wind, A high wind |
| दुरन्ता | = That which has a bad ending or dangerous ending. |
| दिङ्मोह | = Confusion about cardinal points or absence of the idea of it. |
| उन्मार्गप्रवर्तक | = Going through the wrong path like a bad man. |
| अत्यासङ्गः | = Company or union beyond measure. |
| विषयः | = Enjoyment of sensual things. |
| भाजनं | = fit. |
| रजनिकरः | = The moon. |
| करनिकरः | = Multitude of rays. |
| अभव्यः | = Wrong |
| प्रदोषः | = Night |
| दोषजातं | = Group of bad things |
| दुष्प्रकृतिः | = Of bad nature |
| प्रक्षालनक्षमः | = That could wash off |

# Lesson — 14

## संस्कृत-सुभाषित ।

१ अर्धो वा एष आत्मनो यत्पत्नी = Wife is half body of her husband.

२ अद्य पुनः पिशाचविवाहे गर्दभगानं संवृत्तम् = To-day again the singing of a donkey is started in the marriage of a fiend.

३ अन्यद् भुक्तम् अन्यद् वान्तम् = Ate something and was vomitted something else. ( Do something else. )

४ अहिरेव त्वहेः पादान् विजानाति न संशयः = There is no doubt that a serpent knows the feet of a serpent. (A wicked man only knows the ways of a wicked one.)

५ अधिकस्याधिकं फलम् = If one makes more efforts, he earns more success.

६ अकृतोपद्रवः कश्चिन्महानपि पूज्यते = No body worships even an important individual unless he has done any useful work.

७ अये ! कथमनभ्रा वृष्टिः = On ! How is it raining without clouds. ( To become possible of impossible. )

८ अन्धेनैव नीयमाना यथान्धाः = Blind one's followers are always blind people. ( Those who follow a fool, are always fool themselves and thus they fall in a pit. )

९ अवश्यम्भाविनो भावा भवन्ति महतामपि = The thing that is destined to be in one's life, always becomes apparent even in great men's life.

१० अप्रतिषिद्धं अनुमतं भवति = Not to oppose, is just like to accept it.

११ मौनं स्वीकारलक्षणम् = To keep quiet is just to accept a thing.

१२ लोकयात्रा दरिद्रं बाधते = To live becomes impossible even to a poor.

१३ अतिदीप्तोऽपि खद्योतो न पावकः = A fire-fly never becomes fire even if it shines brightly. ( A mean-minded man how-so-ever may profess to be great, he will never he really great. )

१४ बहुजनविरुद्धमेकं नानुवर्तेत = Disregarding the opinion of majority, one should not follow one's opinion only.

१५ ऋणशत्रुव्याधयः निःशेषाः कर्तव्याः = Debt, foe and disease must be eradicated absolutely.

१६ जिह्वायत्तौ वृद्धिविनाशौ = Wisdom and loss depend on one's tongue.

१७ प्रियवादिनो न शत्रुः = One who speaks sweet, never becomes a foe.

१८ नास्त्यर्थिनो गौरवम् = A poor one has no pride.

१९ एरण्डमवलम्ब्य कुंजरं न कोपयेत् = Taking a stick of castor-oil plant, one should not make an elephant angry. ( One should not fight with a mighty one, taking the assurance of a weaker one. )

२० अतिप्रवृद्धा शाल्मली वारणस्तम्भो न भवति = A cotton plant howsoever it may be a big one, cannot be able to bind an elephant. ( A weak man, though he may be a big one, cannot be able to take over a mighty one. )

२१ अङ्गीकृतं सुकृतिनो न परित्यजन्ति = Good men never leave any work half done, when once they begin it.

२२ न समुद्रतलं स्पृष्ट्वा नरा विन्दन्ति मौक्तिकम् = Unless you touch the bottom of the sea, you cannot find pearls. ( Unless you make efforts, no work is successfully carried out. )

२३ शत्रुं छिद्रे परिहरेत् = After knowing the weak points of the enemy, you must invade him.

२४ आज्ञाफलमैश्वर्यम् = Every one should obey his own orders and this is our wealth.

२५ न मीमांस्याः गुरवः = One should not criticise his teacher.

२६ अतिदीर्घोऽपि कर्णिकारो न मुसली = Even a big and long tree of Karnikar can not be made a club.

२७ सुजीर्णोऽपि पिचुमन्दो न शङ्कुलायते = Even though a Pichumanda tree is too old, it cannot be cut with a penknife.

२८ यथा बीजं तथा निष्पत्तिः । यथा कृतं तथा लब्धं = As is the seed, we get the fruit accordingly. As are our deeds, the same way are the fruits earned.

२९ यथा श्रुतं तथा बुद्धिः = As is the knowledge, the intellect is that way.

३० संस्कृतः पिचुमन्दो न सहकारो भवति = Though the Pichumanda tree is tried to be made perfect, yet it will not turn into a mango tree.

३१ न चागतं सुखं त्यजेत् = Happiness which is got, should never be renounced.

३२ अभद्रं भद्रं वा विधिलिखितमुन्मूलयति कः ? = Who will be able to set aside the fate, though it may be bad or good ?

३३ अल्पेन सिद्धे महति कश्चिन्नैव प्रवर्तते = If some work is successful with little efforts, then why should one try to make intense efforts ?

३४ अक्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् = If any body wishes to have honey and he gets it at his home, then why should he go to a mountain ?

३५ अवयवशक्तेः समुदायशक्तिर्बलीयसी = United strength is mightier than the divided strength.

३६ अशक्तोऽहं गृहारम्भे शक्तोऽहं गृहभञ्जने = I am unable to build a house, but I am able to destroy it. ( To construct anything is very difficult, but to destroy it is very easy. )

३७ अस्य पापोदरस्यार्थे किमनादि न नाटकम् = For this sinful stomach what not have I done ?

३८ अर्थो हि लोके पुरुषस्य बन्धु = In this world, wealth is the brother of a man.

३९ गतानुगतिको लोकः = Men always follow others example.

४० अम्बुनो बिन्दुरल्पोऽपि शुक्तौ मुक्ताफलं भवेत् = If even a drop is fallen into a pearl-oyster it becomes a pearl.

४१ देही देहं त्यक्त्वा ऐन्द्रपदं न वाञ्छति = A man never wishes the throne of the God Indra, if he has to leave the body.

४२ अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति = Even the brtoher leaves one's association, if he is following the wrong path.

४३ अजा सिंहप्रसादेन वने चरति निर्भयम् = Even a sheep becomes fearless getting the favour of a lion.